ISSN : 2349-6452

# शिक्षामृतम्

## शिक्षाविभागीया शोधपत्रिका

सप्तमविन्यासः, शिक्षाविभागः

केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
( भारतशासनशिक्षामन्त्रालयाधीनः )
श्रीरणवीरपरिसरः, कोट-भलवाल, जम्मूः - 181122 ( जम्मू-काश्मीरम् )
ई मेल : ranbirjmu@gmail.com वेबसाईट : http://csu-jammu.edu.in

2020

# शिक्षामृतम्

## ( शिक्षाविभागीयशोधपत्रिका )

संरक्षकः

**प्रो. परमेश्वरनारायणशास्त्री**

कुलपतिः

प्रधानसम्पादकः

**प्रो. मदनमोहनझाः**

निदेशकः

सम्पादकः

**प्रो. कुलदीपशर्मा**

आचार्यः, शिक्षाशास्त्रविभागः

सह-सम्पादकाः

**डॉ. मदनकुमारझाः**     **डॉ. चक्रधरमेहेरः**

**डॉ. विजयकुमारजेना**     **डॉ. देवेन्द्रकुमारमिश्रः**

**सप्तमविन्यासः, शिक्षाविभागः**

**केन्द्रीयसंस्कृतविश्वविद्यालयः**

संसदः अधिनियमेन स्थापितः

**( भारतशासनशिक्षामन्त्रालयाधीनः )**

श्रीरणवीरपरिसरः, कोट-भलवाल, जम्मूः-181122 (जम्मू-काश्मीरम्)

**ई मेल : ranbirjmu@gmail.com**     **http://csu-jammu.edu.in**

**2020**

प्रकाशकः
निदेशकः
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
संसदः अधिनियमेन स्थापितः
**( भारतशासनशिक्षामन्त्रालयाधीनः )**
श्रीरणवीरपरिसरः, कोट-भलवाल, जम्मूः-181122 (जम्मू-काश्मीरम्)
**ई मेल : ranbirjmu@gmail.com वेबसाईट : http://csu-jammu.edu.in**
दूरभाषः 0191-2623090

---

**समकक्षव्यक्तिसमीक्षासमितिः**

प्रो. आर.पी. पाठकः प्रो. रजनीजोशीचौधरी
प्रो. प्रभाचौधरी प्रो. प्रह्लाद आर.जोशी
डॉ. शरत्चन्द्रशर्मा

**सम्पादनसहयोगः**

- डॉ. शुभश्रीः दाशः
- डॉ. मदनसिंहराजपुरोहितः
- डॉ. हरिओमः
- डॉ. विवेककुमारः
- डॉ. प्रमोदशुक्लः
- डॉ. सन्तोषगोडरा

---

© सर्वाधिकारः केन्द्रीयसंस्कृतविश्वविद्यालयस्य
जम्मूस्थस्य श्रीरणवीरपरिसरस्य शिक्षाविभागाधीनः

प्रकाशनम् 2020

प्रथमसंस्करणम् : 500 प्रतयः

ISSN : 2349-6452

मूल्यम् : ₹ 125.00

मुद्रकः
**डी.वी. प्रिंटर्स**
97-यू.बी., जवाहर नगर, दिल्ली-110007

प्रो. पी. एन्. शास्त्री
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मा.वि.वि.)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः

Prof. P. N. Shastry
Vice-Chancellor
Central Sanskrit University, Delhi
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, DU)
Under MHRD, Govt. of India

# मङ्गलाशासनम्

**उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम्।**
**सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि।।**

(अथर्ववेदः 1/1/4)

एतर्हि संस्कृतसंवर्धनार्थं नैके विपश्चिदपश्चिमाः सुरभारतीसमाराधनैकधियः सावहिताः सर्जनविस्तारव्रतं जगृहुः। तदत्र पाण्डित्यपरम्परापरिपोषणपरायणाया जम्मू-काश्मीरधरायाः संस्कृतसंस्थानानामग्रदूतस्यास्मद्विश्वविद्यालयस्य श्रीरणवीरपरिसरस्यास्ति किञ्चिदतिशयं निरौपाधिकं वैशिष्ट्यम्। भारतभालकिरीटस्य मासरमणिभागस्थस्यामुष्य परिसरस्य विद्वन्मण्डलः साधीयसीं संस्कृतसंवर्धनसेवां विधातुमलंभूष्णुरस्ति। अत्रत्यस्ता-वच्छिक्षाविभागो ग्रान्थिकं **'शिक्षामृतम'**मथीदिति विज्ञाय सन्तोषसुखं सेवते मे मनः। सुविदितमेव यद्विभागोऽयं शिक्षकप्रशिक्षणेन सह प्रतिवर्षममुष्याः पत्रिकायाः समुत्कृष्टं प्रकाशनं समाचरति। सैषा पत्रिका विदुषाम्, ज्ञानपिपासुपाठकानां छात्राणां च ज्ञानरञ्जनाय समर्था स्यादित्यत्र को वा संशीतिलेशः? मन्ये महत्त्वपूर्णशोधलेखैः प्रपूरिता पत्रिकेयं विद्वत्संसदि नूनमेव समादरं लभेत। सारदा शारदा सदैव परिसरेऽस्मिन् सौमनस्यं देयादिति प्रार्थये। परिसरप्रमुखः तदीयसहयोगिनश्च एवमेव सामरस्यं सौमनस्यञ्च निधाय सुधीजनरञ्जनाय सदैव संलग्नाः सन्तीत्यतो विशेषतः समेषामेषां वर्धापनं विधाय कृतकार्याणां शुभं मङ्गलञ्च कामये।

यौष्माकः

प. ना. शास्त्री

**(प्रो. परमेश्वरनाराणशास्त्री)**

56-57, Institutional Area, Janakpuri, New Delhi-110058 (INDIA)
Ph. No.: (O) 011-28523949, EPABX: 28524993, 28521994, 28524995,
E-mail: pnshastry11952@gmail.com / rkspvc@yahoo.com website : www.sanskrit.nic.in

प्रो. एस्. सुब्रह्मण्य शर्मा
कुलसचिव
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान, मानित विश्वविद्यालय)
शिक्षा मन्त्रालय, भारत सरकार के अधीन
56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली - 110058

Prof. S. Subrahmanya Sarma
REGISTRAR
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, Deemed to be University)
Under Ministry of Education, Govt. of India
56-57, Institutional Area, Janakpuri, New Delhi - 110058

# कुलसचिववाक्

**विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या।**
**ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्येतदतीव विश्वम्।।**

(श्रीदुर्गासप्तशती, 11/31)

श्रीवैष्णवीचरणपल्लवतले त्रिकूटकूटस्थितस्य श्रीरणवीरपरिसरस्य शिक्षाविभागस्य **'शिक्षामृतम्'** इतीमां वार्षिकपत्रिकां प्राकाश्यं नीयमानां यथासमयं विदुषां सुधीपाठकानाञ्च हस्तगतां कुर्वाणोऽहं हर्षप्रकर्षविशेषमनुभवामि। प्रतिसंवत्सरं सांस्थानिकविदुषां संस्कृतहिन्द्याङ्ग्लभाषानिबद्धशोधलेखैः सुसज्जिता पत्रिकेयं नवज्ञानोन्मेषार्थं प्रयतत इति तु पाठकप्रसिद्धिरस्त्येव। वस्तुतस्तु ज्ञानसङ्क्रमणार्थं लोकप्रियेषु साधनेषु पत्रिकायाः औचित्यमतिशयेन बोभूयते। अमुष्यामेकत्रैव सारगर्भितान् शोधलेखान् पठित्वा गीर्वाण्यनुरागपरागचञ्चरिकाः ज्ञानपिपासवः ज्ञानामृतं समास्वादयितुं क्षमन्ते। क्रमेऽस्मिन् स्वगरिममयीं परम्परामनुसरन्ती सैषा पत्रिकापि पाठकवृन्दे लोकप्रियतामवाप्स्यतीत्याशासे। ततस्ततः सारस्वतकर्मण्यस्मिन् शोधलेखान् प्रस्तुतवतां विदुषामभिनन्दनं विधाय सम्पादकमण्डलस्याचूडान्तसदस्येभ्यः शुभाशंसनं प्रयच्छन् परिसरस्य समृद्ध्यर्थं चेष्टमानानां समस्तपरिसरीयसदस्यानामपि अधोक्तस्वस्ति-वादेनासञ्जनं व्याहरामि -

**स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव।**
**पुनर्ददताघ्नता जानता सं गमेमहि।।** (ऋग्वेदः, 5/51/15)

यौष्माकः

(प्रो. एस्. सुब्रह्मण्य शर्मा)

Ph. No.: (O) 011-28520979, EPABX : 28524993, 28521994, 28524995,
EMAIL : sanskrit.registrar@gmail.com / ps2reg.csu@gmail.com WEBSITE : www.sanskrit.nic.in

केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीरणवीरपरिसरः,
कोट-भलवालः, जम्मू-181122
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः

CENTRAL SANSKRIT UNIVERSITY
Shri Ranbir Campus,
Kot- Bhalwal, Jammu-181122
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, Deemed to be University)
Under Ministry of Education, Govt of India

क्रमांक
No.......................

दिनांक
Date..................

# प्रणतिः

**त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया।**
**सम्मोहितं देवि समस्तमेतत् त्वं वै प्रसन्ना भुवि मुक्तिहेतुः॥**

(श्रीदुर्गासप्तशती, 11/5)

प्रतिभाप्रभाभास्वरेऽस्मिन् भारतराष्ट्रे सुरभारतीभाषायाः प्रातिभप्रकर्षं प्रकाशयत्सु सांस्थानिकपरिसरेषु श्रीरणवीरपरिसरोऽयं संस्कृतानुरागिणामाशाकेन्द्रत्वेन विशिष्यते। तदस्य परिसरस्य शिक्षाविभागस्य **'शिक्षामृतमि'**ति नाम्ना सातत्येन प्रकाश्यमाना वार्षिकपत्रिका संस्कृतशिक्षाजगति गरिमाणमादधाति। शिक्षाविभागोऽयमनया पत्रिकया शिक्षाया भारतीयदृष्टिं विज्ञापयितुं यतमानोऽस्तीति विद्वत्सु बहुधा शोश्रूयते। साम्प्रतिकस्य शिक्षाजगतः "True education is always liberal" इत्येष विचारः अस्मत्पूर्वजैः महर्षिभिः "सा विद्या या विमुक्तये" इत्यस्मिन् वचस्युक्तमेव। मन्ये यत् संस्कृतवाङ्मये प्रकीर्णानाम् एतादृशानां वैचारिकरत्नानां माल्यं निर्माय सरस्वतीसमुपासनारतानां ज्ञानाभिनन्दनाय विभागस्य पत्रिकाप्रकाशनमिदं सर्वथा समुपकारकं सम्भविष्यतीति। अहमवसरेऽस्मिन् सम्पादकमण्डलाय विभागाय च भूयांसि शुभाशंसनानि समर्प्य मामकीनां वर्धापनोक्तिं प्रहिणोमि।

**शुक्रोऽसि भ्राजोऽसि स्वरसि ज्योतिरसि।**
**आप्नुहि श्रेयांसमति समं क्राम॥** (अथर्ववेदः, 2/11/5)

**प्रो. मदनमोहनझाः**
परिसरनिदेशकः

तारः संस्थानम् / GRAM : Sansthan (O) Tele : 0191-2623090, 2623533, Fax : 0191-2623090, e-mail :- ranbirjmu@gmail.com

# सम्पादकीयम्

**विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु।**
**त्वयैकया पूरितमम्बयैतत् का ते स्तुतिः स्तव्यपरा परोक्तिः॥**

–श्रीदुर्गासप्तशती, 11/6

श्रीरणवीरपरिसरस्य शिक्षाविभागपक्षतो भारतविद्याभूयिष्ठा ज्ञानपरम्परा-सञ्चारपरायणा प्रतिवर्षं प्रकाश्यमानेयं **'शिक्षामृतम्'** इति पत्रिकाधुना सदयहृदयस्य तत्रभवतः हस्तङ्गता शोभते। को वा न जानाति यत् वैदिककालादेव विलसति विश्ववारा संस्कृतिरिति विख्यातिमुपगता सनातनाभिधा भारतीया संस्कृतिरिति। तदस्याः संस्कृतेः दिव्यसन्देशाः मानवतायाः दिङ्निर्देशाय पुनरपि प्राचुर्येण प्राकाश्यं प्राप्नुयुरिति साम्प्रतिकी वाञ्छानुभूयते शिक्षाजगता। यदि सर्वतोभावेन विश्वकल्याणं विश्वशान्तिश्चेष्येते तर्हि भारतीयसंस्कृतिर्नितरां समुपासनीयेति। सैषा संस्कृतिः संस्कृतभाषानुप्राणितेति निर्विचिकित्सितमेव। संस्कृतवाङ्मयमेव विश्वसंस्कृतिभ्यो भारतीयसंस्कृतिं पृथक्कृत्य सविशेषं विभूषयति। सत्यमेवोक्तं यत् **'संस्कृतं संस्कृतिश्चैव श्रेयसे समुपास्य-तामि'**ति। जनकल्याणाय तदत्र संस्कृतनिबद्धाः सांस्कृतिकसंस्काराः प्रतिजनं गच्छेयुरिति सङ्कल्पबद्धाः वयम्। क्रमेऽस्मिन् जानात्येव पाठकगणोऽपि यन्नवानि तत्त्वानि प्राकाश्यं गच्छेयुरित्येतदर्थं सैषा **'शिक्षामृतमि'**ति पत्रिका सश्रद्धं चेष्टते इति। 2011 इति ख्रीस्ताब्दीयवर्षात् पत्रिकाप्रकाशनयत्न एष नूनमेवास्त्यस्माकं सुमहत्पुण्योऽवसरः संस्कृतसेवायै। तदारभ्य शिक्षामृतमेतदाकुलकण्ठान् पाठकान् स्वमौलिकलेखैः सन्तर्पयदस्मिन् पर्यायेऽपि तेषां मानसं नवविचारैरवश्यमेव रञ्जयेदिति विश्वसिमः। अस्मिन्नङ्के संस्कृतहिन्द्याङ्ग्लभाषासु विविधविषयकाः शोधलेखाः प्रकाश्यन्ते, येषां विन्यासकेष्वस्मत्परिसरविद्वद्भिः सह सुप्रतिष्ठिताः बाह्यविद्वांसोऽपि विलसन्ति। अवसरेऽस्मिन् सारस्वतं सहकारं समर्पितवद्भ्यः सर्वेऽभ्यः सर्जकेभ्यः कृतज्ञतया साधुवादमाविष्कुर्मः। प्रकाशनव्यवस्थार्थं परिसरप्रशासनेन सह परिसरप्रमुखोऽपि धन्यवादभागस्तीत्यतस्तत्र नतिततिं प्रस्तुमः। कर्मण्यस्मिन् समेषां शिक्षाविभागीयसदस्यानां सारस्वतं योगदानं प्रशंस्यमस्तीति हेतुना सर्वे विभागीयसदस्याः अपि धन्यवादार्हाः सन्ति। अज्ञानवशात्प्रमादवशान्मुद्रणदोषवशाच्च ये दोषाः सम्भाव्यन्ते, तान् गुणैकपक्षपातिनो विद्वान्सः अविगणय्य अस्मन्मार्गदर्शनं विधास्यन्तीति प्रार्थनया सम्पादकीयं वचनमुप-संहरामः। इत्थम्

सम्पादकः

**प्रो. कुलदीपशर्मा**

# विषयानुक्रमणिका



## संस्कृतखण्डः

## हिन्दी खण्ड



## आङ्ग्ल खण्ड



✦✦✦

# भारतीयसन्दर्भे बुद्धिः मनश्च

-प्रो. मदनमोहनझाः

आचार्यः अध्यक्षश्च

शिक्षाशास्त्रविभागः, श्रीरणवीरपरिसरः, जम्मूः

**श्रीमद्भगवद्गीता : अष्टादश अध्याय**

**बुद्धेर्भेदं धृतिश्चैव गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय॥ 29 ॥**

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥ 30 ॥**

**यथा धर्ममधर्मञ्च कार्यं चाकार्यमेव च।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी॥ 31 ॥**

**अधर्मं धर्ममिति या मन्यते तमसावृता।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥ 32 ॥**

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥ 33 ॥**

भगवद्गीतायां भगवान् श्रीकृष्णः अर्जुनं कथयति हे धनंजय! बुद्धेः धृतेश्चापि प्रकारत्रयं भवति गुणाधारे तत् कथयामि- बुद्धिः प्रवृत्तिं निवृत्तिं च जानाति। अर्थात् किं कर्म किम् अकर्म इति विषयं जानाति। किं कार्यं किमकार्यमिति। केन कर्मेण बन्धनं भवति केन कर्मेण मोक्षः इति। सा बुद्धिः सात्विकी, राजसी तामसी चेति। उपर्युक्तानां श्लोकानां व्याख्यानं कुर्वन् तिलकः कथयति यत्- एवं बुद्धेः विभागकरणेन सदसद्विवेकबुद्धिः इति पृथक् स्वरूपं न स्थास्यति। यतोहि सा बुद्धिः सात्विकबुद्धौ एव अन्तर्भवति। अर्थात् गीतायाः अनुसारेण बुद्धेः स्वरूपत्रयमस्ति। सात्विकी राजसी तामसी च।

वस्तुतः बुद्धिः तच्छक्तिरस्ति येन मनुष्यः कस्यचिदुपस्थितस्य विषयस्योपरि समुचितं चिन्तनं निर्णयं च करोति। अथवा विवेकक्षमता निर्णयशक्तिः वा बुद्धिः। अस्माकं भारतीयसंस्कृतौ अन्तःकरणस्य चतुर्षु वृत्तिषु द्वितीया वृत्तिः। अभिज्ञान-

शाकुन्तलमिति नाटके कविकालिदासः कथयति- सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः। इयं वृत्तिः अर्थात् बुद्धिः नित्यानित्य भेदेन द्विविधा। तत्र नित्यबुद्धिः परमात्मनः अनित्यबुद्धिः जीवानाम् इति।

सांख्यमतानुसारेण त्रिगुणात्मिकायाः प्रकृतेः प्रथमः विकारः बुद्धितत्त्वमिति। इदमेव महत्तत्त्वम्। सांख्ये इदमेव स्वीकृतम् यत् जगतः प्रारम्भे यदा जगत् सुसुप्तावस्थातः जागृतावस्थायामागच्छति तदैव प्रथमतः अस्य बुद्धितत्त्वस्य महत्तत्त्वस्य वा आरम्भः संजातः। नैयायिकाः अस्याः अनुभूतिः स्मृतिः इति प्रकारद्वयं स्वीकुर्वन्ति। केषाञ्चन मतानुसारेण बुद्धेः इष्टानिष्ट-विपत्ति-व्यवसाय-समाधिता-संशय-प्रतिपत्तीति पञ्चगुणाः इति। परमन्येषां मतानुसारेण सुश्रुषा, श्रवणं, ग्रहणं, धारणं, ऊह, अपोहः अर्थविज्ञानमिति सप्तगुणाः। पाश्चात्यविदुषां मतानुसारेण अन्तःकरणस्य व्यापारस्य स्थानं मस्तिष्कं भवति। अतः बुद्धेः स्थानमपि तदेव। यद्यपि बुद्धिः प्राकृतिकी शक्तिः तथापि ज्ञानानुभवयोः साहाय्येन बुद्धौ कदाचित् वृद्धिः अपि भवति। अस्य अपरं नाम मनीषा। धीष्णा। धी। प्रज्ञा। शेमुषी। मति। प्रेक्षा। चित्। चेतना। धारणा। प्रतिपत्तिः। मेधा। मन। मनस्। ज्ञानम्। बोधः। प्रतिभा। विज्ञानम्। संख्या इति।

ब्रह्मवैवर्ते अस्याः स्वरूपं प्रतिपादितं यथा "बुद्धिर्विवेचनारूपा सा ज्ञानजननी श्रुतौ।

महाभारते बुद्धेः स्वरूपं आध्यात्म-आधिभूत-आधिदैवत् इति स्वीकृतं यथा-

**अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी।**
**आधिभूतञ्च मन्तव्यं ब्रह्मा तत्राधिदैवतम्॥**

**सा च बुद्धिः सात्त्विकराजसतामसभेदेन त्रिविधा।**

**तस्याः पञ्चगुणाः यथा-**

**इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता।**
**संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः॥**

इति महाभारते मोक्षधर्मः।

इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः। व्यवसायः उत्साहः समाधिता, चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः। संशयः कोटिद्‌यस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः।

तस्याः सप्त गुणा यथा-

**शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा।**
**ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः॥**

इति हेमचन्द्रः

तस्याः वृत्तिः पञ्चधा यथा-

प्रमाणम् 1 विपर्य्ययः 2 विकल्पः 3 निद्रा 4 स्मृतिः 5 इति पातञ्जलम्।

बुद्धिक्षयकरा अर्थात् बुद्धिनाशस्य द्वादशहेतवः भवन्ति। यथा-

**शोकः क्रोधश्च लोभश्च कामो मोहः परासुता।**
**ईर्ष्या मनो विचिकित्सा कृपासूया जुगुप्सता।।**

द्वादशैते बुद्धिनाशहेतवो मानसा मलाः। "इति कालिकापुराणे 18 अध्यायः।

अपि च।

**बुद्धिक्षयकरा एते माषकासवमृत्तिकाः।**

बुद्धिवृद्धिकरा अर्थात् बुद्धेः विकासः अनेन भवति। यथा-

**निम्बाटरूपवृन्ताश्च बुद्धिवृद्धिकरा मताः।**
**बुद्धिक्षयकरान्नित्यं त्यजेद्राजा च भोजने।**

भोजयेदन्वहं बुद्धिवृद्धिहेतुं नृपोत्तम! "इति कालिकापुराणे 89 अध्यायः।'

न्यायमते सा बुद्धिः विभुगुणः। सा पुनर्द्विविधा अनुभूतिः स्मृतिश्च। यथा-

**विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा।।**

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे। "इति भाषापरिच्छेदः।

सांख्यदर्शने 25 तत्त्वानि भवन्ति। यथा- आत्मा, अन्तःकरणम् (त्रिविधम्-मनः, बुद्धिः, अहंकारः), ज्ञानेन्द्रियः (पञ्चविधः), कर्मेन्द्रियः(पञ्चविधः), तन्मात्रा (पञ्चविधा), पञ्चमहाभूताश्चेत्यादयः। तत्र गुणेषु एव बुद्धेः परिगणनं जातम्। बुद्धिः आत्मनः गुणः इति।

प्रशस्तपादः तथैव कथयति यथा न्यायसूत्रकारः गौतमः कथितवान् यत् बुद्धिः उपलब्धेः ज्ञानस्य च पर्यायस्वरूपा एव। परं शिवादित्यः आत्माश्रयस्वरूपा प्रकाशस्वरूपा बुद्धिरिति स्वीकरोति। अस्यानुसारेण विद्या अविद्या इति नामकः मानसप्रत्यक्षा बुद्धिः इति। एवमेव विश्वनाथपञ्चाननः प्रमा विद्या अप्रमा अविद्या इति स्वीकरोति। अन्नंभट्टस्यानुसारेण सर्वविधव्यवहाराणां हेतुः एव बुद्धिः इति। बुद्धेः भेदं प्रकाशयति अयं यत् स्मृतिः अनुभवश्च एतौ बुद्धिभेदौ। अनुभवश्च द्विविधः- यथार्थायथार्थभेदेन। अनुभवः एव प्रमा।

न्यायदर्शनस्यानुसारेण पञ्चमी प्रमेयस्वरूपा बुद्धिः। बुद्ध्यते येन इति बुद्धिः। अस्मिन्नर्थे बुद्धिशब्दः अन्तःकरणस्य मनसश्च वाचकः इति। महर्षिगौतमः अपि अस्मिन्नर्थे एव बुद्धिशब्दस्य प्रयोगं कृतवान्। तथापि सः प्रमेयरूपेणापि बुद्धेः चर्चां कृतवान् यत् बुद्धिः आत्मनः प्रत्यक्षादि ज्ञानरूपा। ज्ञानार्थकबुध् धातोः भावे क्तिन् प्रत्यये निष्पन्नः बुद्धिशब्दः ज्ञानरूपार्थवाचकः इति। अयमेव उपलब्धिः। अतः न्यायमते बुद्ध्युपलब्धिज्ञानेषु नास्ति भिन्नता।

**पाणिनीयशिक्षायां-**

**आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**

वस्तुतः अत्र मनः अनयोः आत्मबुद्ध्योः दूतत्वेन कायाग्निमाहत्य मारुतं प्रेरयति येन वर्णादिनाम् उच्चारणं भवति। इति पाणिनीयशिक्षायां वर्णोच्चारणव्यवस्थां निरूपितमस्ति। अर्थात् अत्र मनसः प्रकृतिं निरूपयति यत् मनः आत्मनः बुद्धेश्च दूतरूपकः। अत एव एकमाभाणकमप्यस्ति यत्-

**मनांसि नपुंसकं ज्ञात्वा प्रियायै प्रेषितं मनः।**
**ते तत्रैव रमते हता पाणिनिना वयम्॥**

कालिदासः अपि मनः दूतं मत्वा एव मेघं प्रियायै प्रेषितवान्।

मनस् [स्] इति क्लीवलिंगशब्दः। (मन्यते बुध्यतेऽनेनेति। मन्+ "सर्व्व-धातुभ्योऽसुन्।" उणा० 4।188। इति असुन्।) अङ्गशरीरावयवविशेषः इत्यर्थः। यथा। सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि। अवयवास्तु ज्ञानेन्द्रिय- पञ्चकम्।

मनो नाम सङ्कल्पविकल्पात्मिका अन्तःकरणवृत्तिः।

अर्थात् मनसि सदा संकल्पः विकल्पश्च भवति। तत्र स्वविवेकेन कार्यं करोति बुद्धिमान्। मनस्तु कर्मेन्द्रियैः सहितं सत् मनोमयकोशो भवति। मनोमयकोशः मनुष्यप्रकृतेः शुद्धतमा कृतिः इति मन्यते। प्रकृतेः सर्वेषु स्वरूपेषु मनः शुद्धतममिति ज्ञात्वा एव आत्मा अत्रोषित्वा स्वातन्त्र्यमनुभवति। इति वेदान्तसारः। मनः ज्ञानेन्द्रियविशेषः। तत्तु बुद्धीन्द्रियाणां षण्णां प्रधानमिति श्रीकृष्णविभूतिः। यथा, -

**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना।**

इति भगवद्गीता।

अपि च।

**मनो महान् मतिर्ब्रह्मा पूर्ब्बुद्धिः ख्यातिरीश्वरः।**
**प्रज्ञा संवित् चितिश्चव स्मृतिश्च परिपठ्यते।**

**पर्य्यायवाचकाः शब्दा मनसः परिकीर्त्तिताः।**

इति महाभारते मोक्षधर्म्मः॥

न्यायमते अस्य गुणाः। परत्वम्। अपरत्वम्। संख्या। परिमितिः। पृथक्त्वम्। संयोगः। विभागः। वेगश्च। मनोग्राह्याणि यथा। सुखम्। दुःखम्। इच्छा। द्वेषः। मतिः। यत्नश्च। इदं परमाणुस्वरूपम्। शिरोमणिमते वायवीयपरमाणुरूपम्। यथा, -- "परापरत्वं संख्याद्याः पञ्चवेगश्च मानसे। मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः। अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते।" इति भाषापरिच्छेदः। जन्यज्ञानसामान्यं प्रति त्वङ्मनोयोगः कारणम्। यथा, तत्रैव। "त्वचो योगो मनसा ज्ञानकारणम्।" तस्य नवगुणाः यथा,-

**धैर्य्योपपत्तिव्यक्तिश्च विसर्गः कल्पना क्षमा।**
**सदसच्चाशुता चैव मनसो नव वै गुणाः॥** इति मोक्षधर्म्मः।

अर्थात् धैर्य्यम् 1 उपपत्तिः ऊहापोह- कौशलम्, व्यक्तिः स्मरणम्, विसर्गः विपरीतसर्गो भ्रान्तिः, कल्पना मनोरथवृत्तिः, क्षमा, सत् वैराग्यादि, असत् रागद्वेषादि, आशुता अस्थिरत्वम्, इति तट्टीका। अस्य चातुर्विध्यं यथा,- "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्व्वः स्मरणं विषया अमी।" इति वेदान्तः। तस्य अध्यात्मत्वादि यथा,-

**अध्यात्मं मन इत्याहुः पञ्चभूतात्मधारकम्।**
**अधिभूतञ्च सङ्कल्पश्चन्द्रमाश्चाधिदैवतम्॥**

इति महाभारते आश्वमेधिकपर्व्व

तस्य स्वरूपं यथा,- "अनिरूप्यमदृश्यञ्च ज्ञानभेदं मनः स्मृतम्।" इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे 23 अध्यायः। तस्य प्राशस्त्याप्राशस्त्यानुमापकानि यथा,-

**जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै।**
**शिष्ये कलत्रे कन्यायां दौहित्रे बान्धवेऽपि च॥**

**पुत्रे पौत्रे च वचसि प्रतापे यशसि श्रियाम्।**
**बुद्धौ वारिणि विद्यायां ज्ञायते हृदयं नृणाम्॥**

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १ अध्यायः।

तस्य बन्धमोक्षहेतुत्वं यथा,-

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**
**बन्धस्य विषयासङ्गि मुक्तेर्न्निर्व्विषयं तथा॥**

इति विष्णुपुराणे 6 अंशे 7 अध्यायः।

"अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत्याहुरेके तदर्थात्मसम्पदायत्तचेष्टम्। चेष्टाप्रत्ययभूतमिन्द्रियाणाम्। स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्वरजस्तमः सत्त्वगुणयोगाच्च न चानेकत्वं नानेकं ह्येककालमनेकेषु प्रवर्त्तते। तस्मान्नैककाला सर्व्वेन्द्रियप्रवृत्तिः। यद्गुणञ्चाभीक्ष्णं पुरुषमनुवर्त्तते सत्त्वं तत्सत्त्व-मेवोपदिशन्ति ऋषयो बाहुल्यानुशयात्। मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति।" "मनसस्तु चिन्त्यमर्थः। तत्र मनसो बुद्धेश्च त एव समानातिहीनमिथ्यायोगाः प्रकृतिविकृतिहेतवो भवन्ति।" इति चरके सूत्र- स्थाने अष्टमेऽध्याये। "लक्षणं मनसो ज्ञानस्याभावो भाव एव वा। सति ह्यात्मेन्द्रियार्थानां सन्निकर्षेण वर्त्तते। वैधृत्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्त्तते। अणुत्वमथचौकत्वं द्वौ गुणौ मनसः स्मृतौ। चिन्त्यविचार्य्यमूह्यञ्च ध्येयं सङ्कल्प्यमेव च। यत्किञ्चिन्मनसो ज्ञेयं तत् सर्वं ह्यर्थसंज्ञकम्। इन्द्रियाभिग्रहः कर्म्म मनसस्तस्य निग्रहः। ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते। इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते। कल्प्यते मनसाप्यूर्द्ध्वं गुणतो दोषतो यथा। जायते विषये तत्र या बुद्धिर्निश्चयात्मिका। व्यवस्यते तथा वक्तुं कर्त्तुं वा बुद्धिपूर्ब्बकम्। या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते। याति सा तेन निर्द्देशं मनसा च मनोभवा। बुद्धीन्द्रियमनोर्थानां विद्याद् योगधरं परम्।" इति चरके शारीरस्थाने प्रथमेऽध्याये। सत्त्वगुणयुक्तस्य मनसो गुणा यथा,- "आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानञ्च निर्द्दम्भता। कर्म्मानिन्दितमस्पृहञ्च विनयो धर्म्मः सदैवादरादेते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः।" अस्ति धर्म्ममोक्षपरलोकादिकमिति बुद्ध्या चरतीत्यास्तिकस्तस्य भाव आस्तिक्यं अनुत्तापः अक्रोधः धृतिः भूतप्रेतस्मरक्रोधलोभाद्यावेशराहित्यं ज्ञानमात्मज्ञानम्। निर्द्दम्भता कपटाभावः कर्म्म अनिन्दितं अस्पृहं निष्कामञ्च। रजोगुणयुक्तस्य मनसो गुणा यथा,- "क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाधिका दम्भः कामुकताप्यलीकवचनं चाधीरताहङ्कृतिः। ऐश्वर्य्यादभिमानितातिशयितानन्दोऽधिकश्चाटनं प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः।

फ्रायडनामकः पाश्चात्यमनोवैज्ञानिकः स्वरूपाधारेण मनसः त्रिधा वर्गीकरणं कृतवान्। तच्च सचेतनमनः, अचेतनमनः, अर्द्धचेतनमनश्च। तत्र सचेतनमनः मनसः दशमः भागः भवति। इदमेव मनः स्वयमेव पार्श्वस्थानां वातावरणानां विषये अवधानं ददाति। अनेन एव जनाः दैनिकं व्यवहारं कुर्वन्ति। अचेतनमनसः मात्रा प्रायः नवतिप्रतिशतं भवति। अस्य मनसः कार्यविषये जनाः न जानन्ति। इदमेव मनः जनानां मानसिकस्वस्थास्वस्थक्रियासु प्रभावमुत्पादयति। एतेषां क्रियाणां ज्ञानं प्रायः स्वप्नावस्थायां भवति। अस्यामवस्थायां जनानां मूलप्रवृत्तिः सुप्ताः भवन्ति। जनाः मनसः अस्य भागस्योपयोगं कर्तुं न शक्नुवन्ति। अस्य मनसः काचित्क्रिया यदि नियन्त्रणाद्बहिरागच्छति तर्हि जनः मनोरोगग्रस्तः भवति। अर्द्धचेतनमनः पूर्वचेतनमनो

वा सचेतनाचेतनमनसोः मध्यभागः इति। इदं च मनः जनानामिच्छाधीनम्। यथा स्मृतेः तद्भागः यद्भागं स्मरणं कृत्वा जनाः आनयन्ति स्मृतिपटलं प्रति।

फ्रायडमहोदयस्यानुसारेण मनसः प्रायः भागत्रयं भवति। मूलप्रवृत्यात्मकं (ईड) मनः। अयं तद्भागः यत्र मूलप्रवृत्यात्मक्यः इच्छाः भवन्ति। यथा यौनेच्छा, बुभुक्षा, आक्रामकता इत्यादयः। एताः तत्क्षणमेव सन्तुष्टिमिच्छन्ति तथा एताः अतार्किक्यः भवन्ति तथा चेतनायां न प्रविशन्ति। द्वितीयः भागः भवति अहं (ईगो) मनः। इदं भवति सचेतनमनः। इदमेव मूलप्रवृत्यात्मकमनसः इच्छां नियन्त्रयति। अस्मिन् एव विवेकस्य प्रभावः भवति। इदमेव जनेषु विचारतर्कचिन्तनादिगुणान् विकासयति। अस्य मुख्यं कार्यं भवति जनेषु वास्तविकतायाः, बुद्धेः, चेतनायाः, तर्कशक्तेः, स्मरणशक्तेः निर्णयशक्तेः इच्छाशक्तेः, अनुकूलनस्य, समाकलनस्य च विकासः।

तच्च मनः गर्भस्य सप्तमे मासे जायते। इति सुखबोधः। ("पञ्चमे मनः प्रतिबुद्धतरं भवति।" इति सुश्रुते शारीरस्थाने तृतीयेऽध्याये।) तत्पर्य्यायः। चित्तम् चेतः हृदयम् स्वान्तम् हृत् मानसम्। इत्यमरः। 1।4। 31। अनङ्गकम् अङ्गम्। इति शब्दरत्नावली।

✦✦✦

# व्याख्यानविधिः

-सच्चिदानन्दशर्मा

व्याकरणविभागः

व्याख्यापद्धत्यां शिक्षकः प्रस्तुतप्रकरणस्य प्रदत्तविषयस्य वा एकैकं शब्दमादाय तस्यार्थं स्पष्टयति। पदार्थं बोधयन् समास-विग्रह-सन्धिविच्छेद-व्युत्पत्त्यादिभिः पूर्णवाक्यस्य, अनुच्छेदस्य पाठस्य वा सम्यगर्थं स्पष्टयितुं प्रयतते। ततः प्रस्तुत-पाठस्य सारांशं भावार्थं च स्पष्टयति। सः लेखकस्य रचयितुर्वा वर्णनपद्धतेः परिचयं प्रददाति। एषः विधिः व्याख्यानपद्धतिरप्युच्यते।

व्याख्यानविधिः पुरातनशास्त्रीया पद्धतिः। प्रस्तुतप्रकरणस्य विस्तृतविवेचनं व्याख्यानम् इत्युच्यते। अत्र शास्त्रीयतत्त्वानां समागतप्रकरणानां वा स्पष्टीकरणं क्रियते। श्रोता तत्प्रतिपादितपदार्थान् सम्यगवगच्छन्तु इत्यपेक्षाऽत्र विराजते। उच्चकक्षासु एषः विधिः प्रयुज्यते। एषः विधिः प्रवचनविधिरपि वक्तुं शक्यते। पुराकाले वैदिक-मंत्राणां सूत्रार्थानां च व्याख्यानं प्रवचनविधिमाध्यमेनैवाभूत।

मौखिकरुपेणाऽस्मिन् विधौ प्रश्नोत्तराणि शब्दमाध्यमेन भवन्ति। व्याख्यानार्थं प्रवाचकः प्रतिपाद्यविषयवस्तुं सम्यगवधार्य आगच्छति। छात्राश्च तत् प्रवचनं शृण्वन्ति कर्गलपत्रादिषु च लिखन्ति।

शास्त्रार्थावगाहने विषयवस्तुनः स्पष्टीकरणे चास्य विधेः प्रयोगः दृश्यते। अस्मिन् विधौ सरलभाषाप्रयोगः क्रियते। स्वल्पव्ययसाध्योऽयं विधिः। श्रवणकौशलस्य विकासः अस्मिन् विधौ जायते। समय, स्थान, परिस्थित्याद्युपकरणानामपेक्षाऽत्र न भवति। भूरिशः छात्रान् सहैव पाठयितुं शक्तये।

सामान्यतत्या अध्यापकः नियतसमये पाठ्यक्रमस्य पूर्तिं कारयति। नियत-पाठ्यवस्तुन्याधारिकृत्य व्याख्यानं भवति। उत्तमोदाहरणैः व्याख्यानं सफलतामाप्नोति, विषयवस्तुनः स्पष्टीकरणं च सम्यग्भवति।

पूर्वं भूमिकायाः सम्पादनेन सर्वे छात्राः दत्तचित्ताः भूत्वा शृण्वन्ति। प्रतिभाशालिनः, छात्राः लाभान्विताः भवन्ति।

**अस्याः पद्धतेः मुख्यसोपानानि–**

1. विषयवस्तुनः निर्धारणम् (प्रकरणम्)

2. पाठयोजनायां व्याख्यानस्य प्रकारः।
3. प्रस्तुतीकरणम्- भाषाशैलीत्यादयः।
4. सारांशः- निष्कर्षः
5. मूल्याङ्कनम्।

**व्याख्यानविधेः गुणाः**

प्राचीनकाले अस्या विधेः अत्यधिकं महत्त्वं दृश्यते। वेद-उपनिषदादौ विविध-शास्त्रीयग्रन्थेषु च व्याख्यानविधेः महत्त्वं दृष्टिगोचरं भवति। तत्र प्रश्नानन्तरं विविध-व्याख्यानां प्रादुर्भावः परिलक्ष्यते।

**व्याख्यानविधेः दोषाः**

व्याख्यानविधौ छात्राः निष्क्रियस्तिष्ठन्ति। अत्र वक्तुरेव सक्रियता दृश्यते। मात्र श्रवणकौशलमेव विकसितं भवति। परं तार्किकचिन्तनस्य सम्यग् विकासाभावो दृश्यते। सततव्याख्यानश्रवणात् छात्राः अन्यमनस्काः भवन्ति। श्रवणे अनवधानत्वात् विषयवस्तुतः सम्बन्धोच्छेदो जायते। मन्दगतीनां कृते अनुपयुक्तोऽयं विधिः। अयम् एकतरपक्षपाती विधिः। उच्चस्तरीयाणां छात्राणां कृते उपयोगीति वक्तुं शक्यते।

**श्री मद्‌भगवद्‌गीतायामुक्तम् तद्विद्धिप्रणिपातेन**
**परिप्रश्नेन सेवया उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्व दर्शिनः।**

-आध्यात्म गीता 4 अ. श्लोक 34

अत्रोपदेशपदं व्याख्यानस्य पर्यायत्वेन गृहीतम्। गूढ़ आध्यात्मतत्त्वानामुपदेशाः प्रश्नोत्तरसरणिमवलम्ब्य व्याख्याताः सन्ति।

भगवतः पतञ्जलेर्महाभाष्यग्रन्थः प्रश्नोत्तरविधिमाध्यमेन यः व्याख्यातः सः गूढतमः ज्ञानरत्नराशिभूतोऽस्ति। माधुर्यगुणयुक्त सरलया भाषया व्याख्यातोऽयं महाभाष्यग्रन्थः समुद्रराशितः मन्थनान्निःसृत चतुर्दशसूत्रात्मक चतुर्दशरत्नामृतेषु अग्रणी सुधा इवास्ति।

विद्यायाः उपलब्धौ कारणानि निदर्शयन् महाभाष्यकारः कथयति-चतुर्भिश्च प्रकारै विद्योपयुक्ता भवति। आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहार-कालेनेति। आगमकालोपलक्षिता विद्या उपयुक्ता भवति।

**व्याख्यान पद्धतेः सोपानानि**

**पदच्छेदः पदार्थोक्तिर्विग्रही वाक्य योजना**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्।**

पुराकालेऽस्याः पद्धतेर्महत्त्वं सम्यग् द्रष्टुं शक्यते। अधुनापि योग्यशिक्षकाः विषयवस्तुनः सम्यक् स्पष्टयितुमस्य विधेराश्रयणं कुर्वन्ति। कालिदासः शिक्षणकलां प्रशंसयन् मालवाग्निमित्रम् इति नाटके श्लोकमाध्यमेन कथयति–

**श्लिष्टा क्रिया कस्यचिदात्मसंस्था**
**संक्रान्तिरन्यस्य तथोपयुक्ता,**
**यस्योमयं साधु स शिक्षकाणाम्**
**धुरिप्रतिष्ठापयितव्य एव।** मा.अ.अ अङ्क 1. श्लोक 16

अध्यापकेषु स्वोत्तमज्ञानेन सह उत्तमसंक्रान्तिगुणयुक्तशिक्षणकला आवश्यकी तेनैव शिक्षकस्य शिक्षणकला प्रशस्यते यदा विषय वस्तुनः सम्यक् ज्ञानं, उत्तम-शिक्षणकला द्वयोः साम्यं स्यात्।

यः शिक्षकः स्वज्ञानं जीविकायै निजोदरपूत्यर्थं विक्रीणाति स्म तं ज्ञानपण्यं पुराकाले वणिजमवदन्।

**लब्धास्पदोऽस्मीति विवादभीरोस्तितिक्षमाणस्य परेण निन्दाम्।**
**यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति॥**

म. अग्निमि. अंक 1, श्लोक 17

सुशिक्षितोऽपि जनः उपदेशदर्शनेन व्याख्यानमाध्यमेन निष्णातो भवति। व्याख्यान-विधौ विषयवस्तुनः सुस्पष्टता, सुपरिपक्वज्ञानञ्चापेक्षते। अत एवोक्तम्–

**उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः।**
**श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु॥**

मा.अ.अंक 2, श्लोक 9

अग्नौ निधीयमानं काञ्चनं शुद्धं भवति तथैव शुद्धं ज्ञान उत्तमशिक्षणकला युक्तं उपदेशं प्रवचनमञ्च प्रशंसायोग्यम्।

अत एवोच्यते व्याकरणादिशास्त्रे व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहा-दलक्षणम्॥

शिष्टानां व्याख्यानेन सर्वविधसन्देहाः दूरीक्रियन्ते, न तत्र कश्चित् सन्देहस्तिष्ठति। यथा- पाणिनिसूत्रे लण्, अइउण् सूत्रयोर्णकारद्वयस्यैवोपादानेनाणिण् ग्रहणेषु सन्देहादनिर्णयोऽत उच्यते (व्याख्यानतो विशेषप्रतिपत्तिः)। अत्राणुदित्सूत्रं विहाय पूर्वेणाण्ग्रहणं, परेणेण्ग्रहणमिति सन्देहस्यपाकरणं सिध्यति।

गूढतमज्ञानस्य विश्लेषणं, पदच्छेदः, पदार्थोक्तिः विग्रहः, वाक्ययोजना, समाधानम् इत्यादिभिः व्याख्यानविधिः सम्भवति। अतः एषः विधिः उत्तमविधिः इति वक्तुं शक्नुमः।

# श्रीमद्भगवद्गीतायां मूल्यसंवर्धनविषयाः

**-डॉ. चक्रधरमेहेरः**

सहायकाचार्यः, शिक्षाशास्त्रविभागः

के.स.वि श्रीरणवीरपरिसरः, जम्मूः

अस्यां हि भगवद्गीतायां नैके विषयाः वर्णिताः। तथाप्यत्र मूल्यसम्बन्धितविषयाः एव प्रधानाः। तत्र न केवलं नैतिकमूल्यसम्बद्धोपदेशोऽस्ति, अपि च आध्यात्मिकं मूल्यं सामाजिकमूल्यं च प्रत्यध्यायं वर्तेते। तत्र मोक्षरूपस्य परमपुरुषार्थस्य प्राप्तिः प्रत्येकमपि मानवस्येष्टम्। तस्य प्राप्तिः कथं भवेत् इत्युपदिशता मोक्षप्राप्तौ ज्ञानमेव परमं साधनमिति भगवता श्रीकृष्णेनोच्यते-

**न हि ज्ञानेनसदृशं पवित्रमिहविद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।** (भ.गी. 4/38)

सम्प्रति भगवद्गीता एव एतादृशाणां मानवीयमूल्यानां विकासे अवश्य-मुपकुर्यादिति मेऽस्ति विश्वासः। आधुनिककाले निरन्तरं कार्यं कुर्वतां जनानां मानसपटले भगवद्गीता अवश्यं शान्तिं प्रयच्छति, आह्लादञ्च जनयतीति अनुभवैक-वेद्योऽयं विषयः। तत्र निम्नलिखितानि कानिचन मानवीयमूल्यानि उल्लिख्यन्ते येषां वर्णनं श्रीमद्भागवद्गीतायां पञ्चसहस्रवर्षेभ्यः प्रागेव भगवता योगेश्वरश्रीकृष्णद्वारा कृतमस्ति, यच्च साम्प्रतिके अपि युगे मानवसमाजाय वरमिव कार्यं कुरुते।

**धर्माचरणम्-**

**धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजा।**
**यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः।।** महा.

श्लोकेनानेन ज्ञायते यत् धारणयोग्यः ग्रहणयोग्यो वा धर्मः भवति। अर्थात् मानवः स्वकीयजीवने यत् कर्म गृह्णाति तदेव कर्म एव तस्य धर्मः भवतीत्यर्थः। अयं च धर्मः निष्कामभावनया पालनीयः भवेत्। तेनैव तस्य सिद्धिः परमात्मनः च प्राप्तिः स्यात्। उक्तं हि गीतायाम्-

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु।।** 18/45

पुनश्च स्वधर्मः विगुणश्चेदपि सः न त्याज्यो भवेत्। स्वधर्मपालयन् यदि मृत्युरपि सम्मुखे भवेत् तथापि परधर्मे नैव गच्छेत्। तद्यथा-

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्विषम्।।** 18/47

**श्रद्धा-**

प्राचीनवासनाकारणात् जायमानरुचेः नाम श्रद्धा। अर्थात् मनुष्यस्य मोहकारणात् वस्तुषु रुच्यनुसारं तस्य श्रद्धा उत्पद्यते। शरीरेन्द्रियान्तःकरणविषयगताः धर्माः तत्र वासनाद्यात्मधर्माणाम् उत्पादकाः भवन्ति। अतः श्रद्धेयं सात्त्विकी-राजसी-तामसीभेदेन त्रिधा भवति। यदुक्तं हि भगवता श्रीकृष्णेन-

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु।।** 17/2

तत्र पुरुषः स्वान्तःकरणानुरूपं श्रद्धामयो भवति। अर्थात् यः यादृशेन गुणेन युक्तः भवति सः तादृशः श्रद्धायुक्तः भवति। तद्यथा-

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।।** 17/3

**भक्तिः-**

आसक्तिरहितेन शुद्धात्मना ईश्वरप्राप्त्यर्थं यः प्रयत्नः भवति सः 'भक्तिः' इत्युच्यते। गीतायां भगवान् श्रीकृष्णः कथयति - यः तत्त्वतः भक्त्या माम् अभिजानाति सः भक्त्या मामेव प्राप्नोति। तद्यथा-

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।** 18/55

यदि कश्चित् दुराचार्यपि अनन्यभक्तस्सन् मामेव भजते सः सम्यग्व्यवसितो भूत्वा साधुरेव मन्तव्यः भवति। यथा च-

**अपि चेत्सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः।।** 9/30

**त्यागः-**

आध्यात्मिकजीवने त्यागः शान्तेः मुख्यमार्गेष्वेकः वर्तते। परन्तु गीतायां 'त्यागः' इत्यस्यार्थः केवलं कर्मफलानामेव त्यागः, न तु यज्ञ-दान-तमसाम्। उक्तं हि-

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।** 18/5

यतः शरीरधारिणः मनुष्यस्य कर्माणां सम्पूर्णत्यागः नैव सम्भवति। शरीररक्षणाय भोजनादीनां वस्तूनामावश्यकत्वात् तत्सम्बद्धकर्मणां महायज्ञानुष्ठानादीनाञ्च आवश्यकः भवति। अतः यः महायज्ञानुष्ठानादिषु कर्मफलानि त्यजति स एव त्यागीत्युच्यते। तदुक्तं हि गीतायाम्–

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते।।**18/11

**शान्तिः-**

मनसः अपूर्वानन्दाऽवस्था शान्तिरित्युच्यते। अर्थात् यदा मनः पूर्णतया सकारात्मके विचारे विद्यमानं भवति तदा तदपूर्वानन्दमनुभवति। अत्र न कस्यचित् वैरभावस्य हिंसाभावस्य वा उपस्थितिः भवति। गीतायामप्युक्तं यत् यः मनुष्यः सर्वविसांसारिक-कामनाः परित्यज्य निर्ममो भूत्वा अहङ्काररहितः स्पृहारहितश्च सन् विचरति सः शान्तिमवाप्नोति। यस्य च बुद्धिः अहङ्कारादिभिर्युक्ता भवति तादृशी बुद्धिः आत्मविषयकचिन्तनात् दूरे स्थिता भावनारहिता भवति। तथा च भावनारहितस्य जनस्य शान्तेः वा कथं स्यात्? यदुक्तं हि गीतायाम्–

**विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति।।** 2/71 अपि च

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।**2/66

अतः यथा आत्मना एव आपूर्यमाणम् एकरूपं समुद्रम् आपः प्रविशन्ति, आसाम् अपां प्रवेशे अप्रवेशे च समुद्रो न कञ्चन विशेषमापद्यते तथैव सर्वे कामाः शब्दादिविषयाः च निर्विकारेण यं संयमिनं पुरुषं प्रविशन्ति सः शान्तिमवाप्नोति। उक्तं च–

**आपूर्वमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।**

2/70

**क्षमा-**

केनचिदाचरितस्यापराधस्य निरहङ्कारेण स्वेच्छया च कृतः क्रोधस्य समाप्तः क्षमा इति। सभ्यसमाजे क्षमायाचनायाः क्षमादानस्य च विशिष्टं स्थानं वर्तते। कुरुक्षेत्रे

यदा अर्जुनः भगवतः श्रीकृष्णस्य विश्वरूपं पश्यति तदा सहसैव प्रणम्य सात्त्विकमनसा मित्रत्वेन श्रीकृष्णं प्रति प्रागाचरितव्यवहारय क्षमां याचते। यथा च-

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्।।**

11/44

भगवान् श्रीकृष्णोऽपि कथयति यत् यः अद्वेष्टा, सर्वभूतेषु मैत्रः, विषयेषु अनासक्तः, अहङ्काररहितः, सुखदुःखेषु समः, क्षमाशीलः, सन्तुष्टः सन् सततं मय्यर्पितमनोबुद्धिः भवति स मे प्रियः भवति।

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी।।** 12/13

**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः।।** 12/14

**सदाचारः-**

'आचारः परमो धर्मः' इति सिद्धान्तमाश्रित्य सदाचारः सर्वोत्तमं तप इति कारणात् सः सर्वथा पालनीयः। जीवने यदि विद्यते किञ्चन शाश्वतं तत्त्वम्, तर्हि तद् वृत्तमेव। चरित्ररक्षणेनैव मानवः देवत्वं प्राप्नुवन् सर्वान् लोकान् जयति।

**भगवता श्रीकृष्णेन गीतायामुच्यते यत्-**

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्।।** 6/27

अर्थात् रजोगुणरहितस्य प्रशान्तमनसः सदाचारिणः सर्वथा सुखमेवायाति इत्यर्थः।

**आत्मसंयमः-**

अनावश्यकेभ्यः भौतिकसुखेभ्यः इन्द्रियाणां निग्रहणं भवति आत्मसंयमः। मनुष्यः तमोगुणाधिक्येन विवेकज्ञाननाशेन च सांसारिकवस्तुषु आकृष्टो भवति, येन पश्चात् सम्मोहादिस्थितिमवाप्य स्वविनाशमार्गं स्वयमेव निर्माति। परन्तु रागद्वेषादिरहितः आत्मसंयमी इन्द्रियैः सांसारिकविषयान् चरन्नपि निर्मलान्तःकरणो भवति। यथा हि-

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।** 2/64

**परोपकारः-**

परोपकार एव मानवस्य स गुणो येन समष्टेर्व्यष्टेर्वा समुत्कर्षः सम्पद्यते। जीवने बहवः स्वोदरपूर्त्यैकमतयः, स्वार्थसाधनतत्पराः स्वोत्कर्षमेव अभिलषन्तः दृश्यन्ते। यदि सम्पूर्णः लोकोऽयं तथा स्वार्थभावनयैव प्रेरितः स्यात् तर्हि कथमिव सामाजिकी राष्ट्रीया वा समुन्नतिः सम्भाव्येत। अतः भगवतः व्यासस्यासापि मतद्वयं स्पष्टं भवति यत्-

**अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकाराय पुण्याय पापाय परपीडनम्॥**

तथैव श्रीमद्भगवद्गीतायाम् उच्यते यत् ये शीतोष्णादिद्वन्दैः सांसारिकविषयैः च विमुक्ताः, आत्मनि एव नियमितमनसः, आत्मवत् सर्वेषां भूतानां हितेषु निरताः, आत्मावलोकनपराः, क्षीणकल्मषाः भवन्ति, ते ऋषिगणाः ब्रह्मनिर्वाणं लभन्ते। यथा हि-

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।**
**छिन्नद्वैधा यतात्मनः सर्वभूतहिते रताः॥** 5/25

**उदारता-**

प्राणिषु उदारता कश्चन दैवीयगुणः भवति। अनेन स लोके सम्मानितः पूजितश्च भवति। गीतायामपि भगवतः उदारता सम्यक् परिलक्ष्यते। यथा स अनन्तसृष्टेः धर्ता, सर्वभूतानां पालनकर्ता, सर्वेषामीश्वरोऽपि सन् भक्तानां कृते मनुष्यरूपं धारयति। अपि च दुरात्माऽपि यदि शान्तमनसा तमीश्वरं स्मरति तर्हि स चिरं शान्तिमवाप्नोति। ये चानन्यभावनया तं भगवन्तं पर्युपासते तेषां योगक्षेमं सः स्वयं वहति। यदुक्तं हि-

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥** 9/22

**समानता-**

सामाजिकव्यवस्थां सुचारुरूपेण चालयितुं समानता महत्त्वपूर्णा भवति। श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णः कथयति जाति-आकार-स्वभाव-ज्ञानादिदृष्ट्या अत्यन्तोत्कृष्टापकृष्टरूपेण वर्तमानेषु सर्वेषु भूतेषु मे स्वभावः सम एव। तत्र न कश्चिन्मे द्वेष्यः न वा कश्चित् प्रियोऽस्ति। अपि तु मत्प्रियत्वेन भक्त्या ये मां भजन्ते अहमपि तेषु वर्ते इति तद्यथा-

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।।** (9/29)

अहिंसापालनम्–

**अहिंसयैव भूतानां कार्यं श्रेयोनुशासनम्।**
**वाक् चैव मधुरा श्लाक्ष्णा प्रयोज्या धर्ममिच्छता।।**

(मनु. 2/162)

इत्युक्त्यनुसारं सर्वविधहिंसानां परित्याग एव अहिंसा। अहिंसायाः परिपालनार्थमेव भगवान् बुद्धः, भगवान् महावीरः, महर्षिदयानन्दः, महात्मागान्धिश्च स्वजीवनं समर्पयामासु। अहिंसामार्गाचरणेन स्वस्योन्नतिः राष्ट्रोन्नतिश्च भवति। अत एवोच्यते– 'अहिंसा परमो धर्मः' इति गीतायामपि उक्तं यत्–

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशूनम्।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्।।** (16/2)

**अपिच–**

**तेजः क्षमा धृति शौचमद्रोहो नातिमानिता।**
**भवन्ति सम्पदं दैवामभिजातस्य भारत।।** (16/3)

अर्थात् मानवः अहिंसाद्याचरणेनैव पुनः दैवीकूलोत्पन्नो भूत्वा अहिंसा-सत्य-अक्रोध-त्याग-अपैशून-दया-अलोलुपता-अचपलता-तेज-धृति-क्षमा-शौचादीन् गुणान् प्राप्नोति।

**अनासक्तिः-**

रागद्वेषादिरहितकर्मसु निष्पृहभावः भवति अनासक्तिः। संसारे प्रयोजनमुद्दिश्यैव कार्येषु प्रवर्तमानस्य प्राणिनः फलेषु आसक्ति एव दुःखकारणेष्वेकं भवति। अनेन तस्य शोकः, शोकेन च रोगाग्रस्तो भवति। एतस्मादेव गीतायाम् अर्जुनमुद्दिश्य भगवान् श्रीकृष्णः कथयति- हे अर्जुन! तव कर्मण्येव अधिकारोऽस्ति न तु फलप्राप्तिषु। अतः अकर्मण्यपि तव सङ्गः मा भवतु। केवलं कर्मफलहेतुर्भूत्वा निष्काममनसा कर्मकुर्वन्नेव भव।

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।** (2/47)

**समबुद्धिः-**

वैज्ञानिकयुगेऽस्मिन् सर्वमपि कार्यजातं क्षणाभ्यन्तरे भवति। अनेन परस्परम्

अनुदिनमस्मासु स्पर्धा भवति। अतः अल्पे एव काले अधिकफलमपेक्ष्य कार्येषु प्रवर्ततेऽस्माभिः। एतादृशस्थलेषु फलासक्त्या यदि कदाचित् प्रारब्धवशात् फलं नैव लभ्येत, तदा खिन्नो भवति। निष्कामभावनया तु फलाभावेऽपि खिन्नता नोत्पद्यते। फलमनपेक्ष्य किमर्थं कार्येषु प्रवर्तनीयम् इति चिन्तयन् उदासीनोऽपि मा भवेत्। योगस्थस्सन् फलासाक्तिं परित्यज्य तेषु समभावं पश्यन् कर्माणि करणीयानि। यतः निष्कामभावनायुक्तस्य कर्मसु समभावत्वं योग इत्युच्यते।

**उक्तं हि-**

**योगस्थः कुरुकर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिध्यसिध्योस्समोभूत्वा समत्वं योग उच्यते।।** (2/48)

पुनश्च समबुद्ध्या युक्तः पुरुषः सुकृत-दुष्कृते, सुखदुःखहेतुभूते, पुण्यपापे सर्वदा जहाति। तस्मात् समबुद्ध्या निष्कामकर्माचरणे जनः सिद्धो भवेत्, यतः कर्मसु योग एव कौशलं तिष्ठति। तद्यथा-

**बुद्धियुक्तो जहातीह उभे सुकृतदृष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।।** (2/50)

इत्थं श्रीमद्भगवद्गीतायां क्लेशकारणानां नैतिकमूल्यानाञ्च वर्णनपूर्वकं विद्यमानानां क्लेशनिवारणात्मकानां मानवीयमूल्यविकासात्मकानाञ्चविश्लेषणं दृश्यते।

# पुरुषबहुत्वखण्डने श्रुत्याधारितपद्धतेः प्रयोगः

-डॉ. रानी दाधीच

सहायिकाचार्या, सर्वदर्शन,

के.सं.वि. रणवीर परिसरः, जम्मूः

**संधात्परार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यर्थि प्रवृत्तेश्च।।**[1]

सांख्यदर्शनस्य 'सांख्यकारिका' इत्याख्यस्य प्रकरणग्रन्थस्य रचयिता श्रीईश्वर-कृष्णः स्वीयां रचनायां पुरुषस्यास्तित्वसिद्धौ पञ्च हेतूनूपस्थापयन्नाह संघातेति। सांख्यमते पुरुषः चैतन्यः भवति। शरीरेन्द्रियमनस्द्भेभ्यः स्वतन्त्रः शुद्धचैतन्यञ्च भवति। चैतन्य तस्य स्वभावो वर्तते न तु गुणः। प्रकृतिः आनन्दरुपात्मिका भवति पुरुषस्तु चैतन्यरूपः। प्रकृतेः स्वरूपं निरूपयन् ईश्वरकृष्णः पुरुषं तद्विपरीतमिति भणति।

**त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्।।**[2]

व्यक्ताव्यक्ताभ्यां पुरुषस्य वैधर्म्यं निरुपयन् ईश्वरकृष्णः सांख्यकारिकायाम् तद्विपरीतस्तया च पुमान् इत्युक्त्वा स्पष्टयति यत् व्यक्तम् अत्यक्तञ्च त्रिगुणात्मकम् अविवेकिविषयः सामान्यम् अचेतनं प्रसवधर्मि भवतः। पुरुषश्च निर्गुणः विवेकी अविषयः असामान्यः चेतनः अप्रसवधर्मिश्च भवति। स च पुरुषः एक अस्ति अनेकः वा इत्यत्र विभिन्नेषु दर्शनप्रस्थानेषु मतभेदो जायते। वेदान्तिनः आत्मनः एकत्वमङ्गीकुर्वन्ति। नैयायिकाश्च आत्मन अनेकत्वमिति। सांख्येऽपि पुरुषबहुत्वमङ्गी-कुर्वन्नाह-

**जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृतेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुव्यविपर्ययाच्चैव।।**[3]

जननमरणकरणानां प्रतिनियमो व्यवस्था। समस्तेषु शरीरेषु आत्मन एकत्वमङ्गीकृते

---

1. सांख्यकारिका, कारिका 17
2. सांख्यकारिका, कारिका 11
3. सांख्यकारिका, कारिका 18

सति प्रतिनियमव्यवस्था न संघटते। एकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्व एव अन्धादयो, विचित्ते चैकस्मिन् सर्व एव विचित्ताः स्युरित्यव्यवस्था स्यात्। प्रतिक्षेत्रं तु पुरुषभेदे भवति व्यवस्था। न च एकस्यापि पुरुषस्य देहोपधानभेदाहव्यवस्था इति युक्तम् पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात्।[1]

'अयुगपत् प्रवृत्तेः' इत्यनेन हेतुना प्रतिशरीरभिन्नात्मन अस्तित्वं सिद्ध्यति। प्रवृत्ति इत्युक्ते प्रयत्नः। एकस्मिन्नेव समये समस्तानां शरीराणां प्रवृत्तिर्न जायते इत्यस्माद्धेतोः आत्मनः प्रतिशरीरभिन्नत्वम्। यदि आत्मन एकत्वमङ्गीक्रियेत तर्हि एकस्य शरीरस्य यत्ने कृते सति सर्वे यत्नेरन्। नानात्वपक्षे आपत्तिरेव नास्ति। अयुगयत् प्रवृत्तिः दोषस्यास्य निराकरणं करोति।[2]

त्रयाणां गुणानां अन्ययाभावावस्ययापि पुरुषस्य अनेकत्वं सिद्ध्यति। त्रयोगुणा एव त्रैगुण्यम्, तेषां विपर्यय अन्ययाभावः अन्यथाभावो नाम वैचित्र्यं वैलक्षण्यम्। केचित् सत्वगुणबहुलाः भवन्ति यथा– ऊर्ध्वरेतसः केचिद्रजोबहुलाः यथा– मनुष्याः केचित्तमोबहुलाः यथा तिर्यग्योनयः[3]।

सात्विकादिशरीरेषु एक एव पुरुषः भवेच्चेत् त्रयाणां गुणानाम् अन्यथा-भावः न भवेत्। व्यवहारे तथा दृश्यते। अन्यथाभावोऽनुभूयते। अतः पुरुष एको नास्ति पुरुषबहुत्वमस्ति।

सांख्याः वदन्ति यत् 'ब्रह्मैव सर्वज्ञं जगतः कारणम्' इति अयुक्तम् यतोहि तेन परमर्षि प्रणीताय स्मृतेः अनवकाशः प्रसज्येत। तस्मादुक्तम्–

**"स्मृत्यनवकाशदोषप्रसङ्ग इति।**
**चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्"।**[4]

---

1. सांख्यतत्त्वकौमुदी का. 18 कौमुदी
2. प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तः करणवर्तिनी, तथाऽपि पुरुषे उपचर्यते। तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने, स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि, युगपच्चालयेत्। नानात्वे तु नाऽयं दोष इति॥ सांख्यतत्त्वकौमुदी कारिका - 18
3. त्रैगुण्यविपर्ययाच्चैव इति। एवकारो भिन्नक्रमः 'सिद्धम्' इत्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धम्। त्रयो गुणास्त्रैगुण्यम्, तस्य विपर्ययोऽन्यथात्वम्। केचित्खलु सत्त्वनिकायाः सत्त्वबहुलाः, यथोर्ध्वस्रोतसः केचिद्रजोबहुलाः, यथा मनुष्याः केचित्तमोबहुलाः, यथा तिर्यग्योनयः।
   योऽयमीदृशास्त्रैगुण्यविपर्ययोऽन्यप्याभावस्तेषु सत्त्वनिकायेषु न भवेत् यद्येकः पुरुषः स्यात्, पुरुषभेदे त्वयमदोष इति। वहीं–
4. ब्रह्मसूत्र 2.1.1

स्मृतिश्च शिष्टपरिग्रहीता। तासु स्मृतिषु अचेतनं प्रधानमेव स्वतन्त्रं जगतः कारणमित्युच्यते। यदि ब्रह्मैव जगतः कारणं भवति चेत् तत्तत् स्मृतिस्थलेषु अनवकाशदोषो भवेदिति धिया प्रधानमेव जगतः कारणमिति युक्तम्। मन्वादि स्मृतयः कथं विधिरूपाग्निहोत्रादिधर्माणां प्रसङ्गमुपस्थापयन्ति कस्मिन् काले केन विधिना कः विधि रूपचारणीयः, कदा वेदाध्ययने प्रवर्तयितव्यम् कदा समावर्तयितव्यम् इत्यादि अर्थान् बोधयन्ति। विधियागादीनपि बोधयन्ति। तादृशस्मृतिस्थलेषु यदि अनवकाशः भवेच्चेत् न युक्तम्। अतो तादृशविरोधः न स्यात्तथा वेदान्तवाक्यानां व्याख्या करणीया इति।[1]

अस्याक्षेपस्य निराकरणं कुर्वन्नाह आचार्यः शङ्करः–

"कथं पुनरीक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते। भवेदयमनाक्षेयः स्वतन्त्र प्रज्ञानाम्, परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन्। तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन्।[2]"

अर्थात् श्रुतिविरुद्धस्मृति अनवधारणीया भवति। रत्नप्रभाकारः श्रुतेः बलवत्तरतां पुष्टयितुं सावकाशनिरवकाशयोः निरवकाशः बलीय इति न्यायात् श्रुतिं पोषयति।[3] श्रुतिविरोधे स्मृत्यप्रामाण्यस्य इष्टत्वात् पूर्वपक्षो न युक्त इति। ये स्वातन्त्र्येण श्रुत्यर्थं ज्ञातुं शक्नुवन्ति, तेषामयं पूर्वपक्षो न भवेत्।

पुनः सांख्यप्रणेता आचार्यः कपिलः श्रुत्युक्तः कपिलः भिन्न इति स्पष्टयति भगवान् शङ्करः "या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयान्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं, कापिलमिति श्रुतिसामान्यमात्रत्वात्। अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात्। अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्।[4]"

अभिधेयमात्रं पठित्वा सांख्यदर्शनस्य सर्वान् सिद्धान्तान् नेत्रे निमील्य नाङ्गी क्रियते। आचार्यः शङ्करः भाष्ये लिखति–

"स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं प्रवक्ष्यामीत्यतोऽयमन्य

---

1. स्मृतिश्च तन्त्राख्या ..................वेदान्ता व्याख्यातव्याः। ब्र.सू. 2.1.1 शाङ्करभाष्यम्
2. ब्र.सू. 2.1.1 शाङ्करभाष्यम्
3. ब्र.सू. भोलेबाबाविरचिता रत्नप्रभाटीका "तत्त्वे विकल्पनानुपपत्तेः निरवकाशस्मृत्यनुसारेण श्रुतिव्याख्यामुचितम्, सावकाशनिखकाशयोः निरवकाशं बलीय इति न्यायादित्याह – तस्मादिति।"
4. ब्रह्मसूत्रम् 2.1.1 शाङ्करभाष्यम्

स्मृत्यनवकाशदोषोपन्यासः।"[1]

श्रुतौ प्रतिपादितः सर्वज्ञः कपिलः वासुदेवस्यैवांशो वर्तते। सर्वात्मत्वज्ञानरूपोऽसौ वैदिकं तत्वं पोषयति अतोऽसौ सर्वज्ञः। ईश्वरज्ञानेन कपिलं पोषयति सदार्शनिकः कपिलः। श्रुतिवचनं मनुमतं पोषयन्नाह– "यद्वैकिञ्च मनुरवदत्तद् भेषजम्"[2]

"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि संपश्यन्नात्मयाजी वै स्वराज्यमधिगच्छति।"[3]

सर्वभूतेषु आत्मानं आत्मनि च सर्वभूतानि यः पश्यति स आत्मयाजी[4] इत्युच्यते सैव स्वराज्यमाप्नोति।[5] आत्मनः सर्वस्वरूपत्वं सिद्धयन्नाह मनुः यत् दर्शनेऽस्मिन् कपिलस्य सम्मतिर्नास्ति यतोहि स आत्मनः भेदान् परिगणयति।

महाभारतेऽपि निगदितम्–

**"बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु**
**बहवः पुरुषाः राजन् सांख्ययोगविचारिणाम्।"**

**"बहूनां पुरुषाणां हि यथैका योनिरुच्यते।**
**तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥[6]"**

मम तव च य अन्तरात्मा वर्तते अन्येषु ये आत्मानः सन्ति, स एव सर्वेषां साक्षीभूतः। कोऽपि कुत्रापि तस्य ग्रहणं कर्तुं न प्रभवति। सर्वाणि इन्द्रियाणि सर्वाण्यङ्गानि तस्यैव। स्वैरचारी स्वतन्त्रः सुखस्वरूपभूतेषु विचरति स सर्वात्मा। यथाह–

**"ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः।**
**सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्॥"**

**विश्वमूर्धा विश्वभूजो विश्वपादाक्षिनासिकः।**
**एकश्चरति भूतेषु स्वैरचारी ययासुखम्॥[7]**

गीतायामपि अस्य मतस्य उल्लेखो वर्तते–

---

1. ब्रह्मसूत्रम् तत्रैव शाङ्करभाष्यम्
2. तैत्तिरीयसंहिता 2.2.10.2
3. मनुस्मृतिः 12.91
4. यः ब्रह्मार्पणन्यायेन ज्योतिष्टोमयागं करोति स आत्मयाजी इत्युच्यते।
5. ब्रह्मत्वमाप्नोतीति भावः।
6. ब्रह्मसूत्र शाङ्करभाष्ये उद्धृतम् 2.1.1
7. ब्रह्मसूत्रशाङ्करभाष्ये उद्धृतम्

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥**[1]

एतेन सिद्धयति यत् कापिलं तन्त्रं वेदविरुद्धमिति। यथा रवेः रूपविषये निरपेक्षं प्रामाण्यं भवति तथैव वेदस्य निरपेक्षं प्रामाण्यम्।[2]

"वेदस्य प्रामाण्यं स्वतः सिद्धम् अपौरुषेयत्वात्।"

**संदर्भसङ्केतः–**

1. सांख्यकारिका–युक्तिदीपिका, आचार्य श्री केदारनाथ त्रिपाठी (हिन्दी व्याख्याकार) सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी 1996
2. सांख्यतत्त्वकौमुदी, रामशङ्कर भट्टाचार्य, मोतीलाल बनारसीदास 1996, वाराणसी
3. ब्रह्मसूत्र शाङ्करभाष्यम्, स्वामी श्री हनुमानदास जी षट् शास्त्री, चौखम्बा विद्याभवन वाराणसी 2003
4. ब्रह्मसूत्रम्, रत्नप्रभाटीका (भोलेबाबा विरचिता), भारतीय विद्या प्रकाशनम्, दिल्ली, वाराणसी 1998
5. सांख्यकारिका- डॉ. वासुदेव कृष्ण चतुर्वेदी
6. भारतीयदर्शनम्, पद्मभूषणाचार्यः बलदेवउपाध्यायः, शारदामन्दिरम् वाराणसी, 2001
7. भारतीयदर्शनम्, डॉ. नन्दकिशोरदेवराजः, उत्तरप्रदेशशहिन्दीसंस्थानम्, लखनऊ 2002।

---

1. श्रीमद्भगवद्गीतायाम् लिखितम्
2. "अतश्च सिद्धमात्मभेदकल्पनयापि कापिलस्य तन्त्रस्य वेदविरुद्धत्वं वेदानुसारि मनुवचनविरुद्धत्वं च, न केवलं स्वतन्त्र प्रकृति कल्पनयैवेति वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं खेरिव रूपविषये।" ब्रह्मसूत्रम् शाङ्करभाष्यम् 2.1.1

# स्त्रीशिक्षापरामर्शाः

-डॉ. प्रभलविद्याधरः

सहायकाचार्यः,

गुरुवायूर्परिसरः, तृश्शूर्, केरलम्

सृष्टेः मूलं नारी। नरशब्दस्य स्त्रीत्वविवक्षायां ङीष् प्रत्यये कृते नारीशब्दः निष्पद्यते।

**स्त्री योषिदबला योषानारीसीमन्तिनीवधूः।**
**प्रतीपदर्शिनीवामावनितामहिलातथा॥**

**स्त्रियो यत्रपूज्यन्ते रमन्तेतत्रदेवताः।**
**अपूजिताश्च यत्रैता सर्वास्तत्राऽफलाः क्रियाः॥**

(अनुशासन.पर्व.)

सुलक्षणसम्पन्ना,

सृष्टिकर्त्री समाजोद्धारका, मनुष्यरूपकर्त्री, व्यक्तित्वनिर्मात्रीएवंनारीनानापात्राणि-पोषयति। पुरुषाणां जीवनप्रगतौस्त्रीणां स्थानं वर्तते इति कथनेनास्ति संशयः। अतः वक्तुं शक्यं यत् स्त्रीशक्तिरूपिणी, सर्वकार्यसाधिका चेति।

स्त्रीशक्तिः- नानापात्राणिपोषयन्ती सा अध्ययनाध्यापनकलायामपि सिद्धहस्ता-जाता। वैदिककालादारभ्य अद्यावधि सर्वक्षेत्रेषु सा अग्रगामिनी दृश्यते। वेदाध्ययने, विज्ञाने, आधुनिकविषयपठने एवंसर्वत्र स्वीयां प्रतिभां प्रदर्शयन्ती पुरुषं सन्मार्गे नयन्ती समाजे इतिहासे चैषा सर्वविधसमर्था इति न्यरूपि। तस्याः विभिन्नरूपाणि परिशीलयामः यदि- नारी, मृदुभाषिणी, सरला, अक्रोधना, पतिव्रता, आज्ञाकारिणी, प्रसन्नचित्ता भवेदिति ज्ञायते। बाल्ये सर्वान्या शिक्षयति विशिष्टा, प्रसन्नवदना, त्यागमयी, स्वार्थरहिता, माता सा एव प्रथमगुरुस्थानं भजते। सा प्रतिदिनं वन्दनीया, स्मरणीया, पूजनीया, सेवनीया च। तादृश्याः मातुः वैशिष्ट्यविषये अस्मच्छास्त्रेषु इतिहासादिग्रन्थेषु चोक्तमस्ति। यथा-

**पितुः शतगुणामातागर्भधारणपोषणात्।**
**अतोहि त्रिषु लोकेषु नास्ति मातृसमो गुरुः॥**

**नास्ति भार्यासमं मित्रं नास्तिपुत्रसमः प्रियः।**
**नास्ति भगिनीसमा मान्या नास्ति मातृसमो गुरुः॥**

(बृहद्धर्मपुराणम्-पू.ख-2/33,35)

तथैव स्त्रीयां कतिपयधर्माः वर्तन्ते। स्त्रीधर्माः यथा-

**स्त्रीभिर्भर्तृवचः कार्यमेषधर्मः परः स्त्रियः।**
**आशुद्धेः संप्रतीक्ष्यो हिमहापातकदूषिताः॥** (याज्ञ. स्मृ.)

**सामाजिकचिन्तनम्-**

यद्यप्येषा सदा सर्वदा समाजकल्याणं वाञ्छति कुटुम्बपालने समाजोद्धारे च स्वपात्रं सुष्ठुं सञ्चालयति। परं पुरुषाधिक्यसमाजेऽस्मिन् तस्याः याथार्थ्यसम्मानः न जायते। तत्र सन्तिनैकानि कारणानि। यथा-

1. आधुनिककालेऽपि स्त्रीविचाराणां कृते सम्माननं नास्ति।

2. ताः गृहे एव भवेयुरिति भावना, धारणेयम् एकविंशतिशताब्द्यामपि नापगता।

3. ताः गृहसम्बन्धिकार्यसल्लापेष्वेव सल्लग्नाः स्युः, न तु सामाजिककार्येषु इत्यपि धारणा नैव दूरीकृता।

4. यदि पुत्री जननं प्राप्ता तर्हि गृहे अधिकोल्लासः न दृश्यते। परं पुत्रप्राप्तौ महोत्सवादिकमाचरन्ति अद्यतनशिक्षितसमाजः।

तत्र स्त्रीपुरुषयोरुभयोरपि समानत्वंदरीदृश्यते।

5. सर्वकार्याणि नैषा साधयितुमर्हा, अबला, शक्तिहीनेत्यादि चिन्तनानि समयेऽस्मिन् अपि नैवापाकृतानि सन्ति।

6. यावद्वा उच्यतां स्वातन्त्र्यप्राप्तेः अनन्तरमपि यथा विदेशे स्त्रीणां विकासः वर्तते न तथा भारते वर्तते। साम्प्रतिकसमाजे यद्यपि ताः सर्वक्षेत्रेषु स्वीयां प्रतिभां प्रदर्शयन्त्यः सन्ति, तथापि इतोऽपि कुचिन्तनानि नापगतानि।

**स्वातन्त्र्योत्तरकालिकस्त्रीशक्तिः**- आर्यावर्ते नारीणां समर्थनं सदा आसीत्। वेदाध्ययनादारभ्य राजनीतिक्षेत्रपर्यन्तं ताः स्वकौशलं प्रादर्शयन्। तत्रसमर्थकाः पुरुषाः एव आसन्नितिकथने नास्ति लेशमात्रसंशयः। पुराकालापेक्षया अधुना स्त्रीणामध्ययन-प्रतिशतमधिकं जातम्। रक्षणक्षेत्रे, अध्यापने, अभियान्त्रिकशिक्षायां, वैद्यक्षेत्रे, प्रबन्धन-प्रशासनक्षेत्रेऽपि एताः स्वसामर्थ्यं प्रदर्शयन्त्यः दृश्यन्ते। स्वातन्त्रोत्तरकाले ष्तासां कृते सर्वविधस्वातन्त्र्यं दत्तमस्ति। अतः तासां पोषणम्, अभिवृद्धिः विकासः सर्वतोमुखतया जायते इति कथने नास्ति सन्देहः। स्वशक्त्या पृष्टपोषणेन च ताः राष्ट्रोन्नत्यामपि अग्रगामिन्यः वरीवर्तन्ते। यथा व्योमक्षेत्रेकल्पनाचावला, क्रीडासु-करणंमल्लेश्वरी,

मेरीकोम्, पि.वि.सिन्धु, आद्याः, राजकीयक्षेत्रे-इन्दिरागान्धी, सुषमास्वराज्, प्रतिभापाटिल्, मीराकुमारी, सुमित्रामहाजन्, निर्मलासीतारामन्प्रभृत्यः समाजे स्वीयप्रतिभां प्रदर्शयन्त्यः दृश्यन्ते। स्वातन्त्र्योत्तरकाले तासां स्थितिः प्रशंसनीयेति कथने नास्तिसन्देहः।

**स्वातन्त्र्योत्तरकालिकस्त्रीणां स्थितिः-**

1. स्वतन्त्रभारते स्त्रीणामुन्नतिः शनैः शनैः वृद्धिंगच्छतीति भावना वर्तते।

2. वञ्चितसमाजात्, पीडितसमाजात् पुनः तासामुन्नतिः भवेदिति पुरुषचिन्तनेन-उन्नतौ तासां परिवर्तनमागतमिति ज्ञायते। ताः सम्मानार्हाः इति सर्वजनसम्मतम्।

3. स्त्रीपुरुषभेदभावः अपगतः। अधिकांशेन उभौ समानौ इति भावना समुदिता।

4. अनया भावनया सर्वा साक्षराः जायमानाः परिदृश्यन्ते।

5. कस्मिन्चित् परिवारे यदि महिला काचित् शिक्षिता भवति, तर्हि सः परिवारः सुशिक्षितः सुरक्षितः च भवति। तासां समर्थनं संविधानेनाऽपि कृतमस्ति।

भारतसंविधानेन प्रणीतम्-नारीणांकृते समानगौरवं तथा समानता, साक्षरता च इति। यथा- राजस्य नागरिकाणां विरुद्धे न कोऽपि वदेत्-धर्मविषये-जाति-लिङ्ग-जन्मस्थानमित्येषामाधारेण कोऽपि विरोधं न कुर्यात्। इत्थं नार्यः संविधानेन पोषिताः।

स्त्रीणामुन्नत्यै अनन्तरकाले नैके आयोगाः, नैकाः योजनाः, समितयः आरचिताः सन्ति। कतिपयात्र परामृश्यन्ते। यथा-

**National Committee on Women's Education-1958**

राष्ट्रियमहिला-शिक्षा समितिः, तस्याः नाम।

दुर्गाबाईदेशमुख् महाभागयाः आध्यक्षे इयं समितिः रचितावर्तते।

परमर्शाः -1) स्त्री-शिक्षां, सर्वकारः एका विशिष्टसमस्येति मत्वा कञ्चनकालं-विशेषपोषणं विशेषावधानञ्च देयमिति। 2) पृथग्योजना काचित् निर्मेया, निश्चितावधौ स्त्रीशिक्षायाः विकासः सम्पादनीयेति। 3) राज्यस्तरे पृथक् समितयः विरचय्य नीतिनिर्धारणम् इदमित्थमिति निर्देष्टव्यम्। 4) ग्रामीणस्त्रीशिक्षाविषये च विशिष्टश्रद्धा देयेति कथितम्। 5) स्त्री-पुरुषशिक्षायां विद्यमानभेदम् अपाकृत्य समानशिक्षादानाय प्रयत्नः विधेयः। 6) स्त्रीशिक्षासमस्यानामुपरि कार्यं कर्तुं पृथगेकः संरक्षणविभागः रचनीय इति सूचितम्। 7) राज्यस्तरेऽपि समितयः (State Council on Education for girls & Women) रचनीयाः इति प्रोक्तम्। 8) माध्यमिकस्तरे बालिकानां विकासः, नानासुविधाः कल्पनीयाः इति निर्दिष्टम्।

**राष्ट्रियमहिला-शिक्षा परिषद्-1959-** अध्यक्षः नासीत्, सचिवः अपिनास्ति। परं 27 सदस्याः आसन्। विद्यालय-बालिकानां, प्रौढस्त्रीशिक्षा सम्बद्धसमस्यानां समाधानं कार्यम्। स्त्रीशिक्षायाः विषये विचारगोष्ठीनां सञ्चालनं कार्यम्।

**हंसामेहतासमितिः-1962-** राष्ट्रियमहिलाशिक्षा

परिषदः अनन्तरं बालबालिकानां पाठ्यक्रमेषु किं परिवर्तनमावश्यकम्? भेदः स्याद् वा इति विचारः कृतः। समितिरियं प्रधानतया सूचनाद्वयं दत्ताऽस्ति।

• **प्रथमा**-पाठ्यक्रमेषु अन्तरं न स्यात्। साम्प्रतिकभारते जनतन्त्रीय तथा समाजवादीसमाजस्य स्थापना चलदस्ति, अतः समाजे शिक्षायाः सम्बन्धः व्यक्तिगतक्षमतानां तथा रुचीनां विषये स्यात्। लिङ्गविषयकसम्बन्धः न कोऽपि स्यात्। There would, there fore, be not need in such a society to differentiate curricula on the basis of sex- **Hansamehata Commission.**

• **द्वितीया**-भारते तदा जनतान्त्रिक तथा समाजवादीयसमाजस्य निर्माणं प्रचलदस्ति, अतः बालबालिकासु मनोवैज्ञानिकं तथा सामाजिककार्याणां भेदज्ञापनाय पाठ्यक्रमनिर्माणं कर्तव्यम्। पाठ्यक्रमभेदेन समाजनिर्माणेभेदः न स्यात्। अतः तादृशः निर्णयः नैव कार्यः, साम्प्रतं विद्यमानान्तरम् इतोऽपि अधिकं भवेत्। Care Should be taken to see that no step is taken which will tent to perpetuate or intensify the existing difference.

**कोठारीकमीशन्**-स्त्रीशिक्षा त्रिधा विभक्ता-

• प्राथमिकः– संविधानद्वाराप्रदत्तानिवार्यशिक्षापालनं, विद्यालयप्रेषणाय अभिप्राय-ग्रहणम्, पृथक् विद्यालयनिर्माणम्, मुक्तपुस्तकदानम्, वस्त्रदानम्, लेखनसामग्रीदानम्, 11-13 आयुष्मतीनां बालिकानाम् अल्पकालीनशिक्षायाः व्यवस्थाकल्पनम्।

• माध्यमिकः– छात्रावासकल्पनम् , छात्रवृत्तिदानम्, व्यावसायिकशिक्षादानम्।

• उच्चस्तरः– उच्चशिक्षायै प्रोत्साहनम्, कलाविज्ञानप्रौद्योगिकीविद्यागृहविज्ञान-शिक्षाऽदिपाठ्यक्रमेषु आकर्षणम्, स्त्रीशिक्षासमस्यानां समाधानाय अनुसन्धानकेन्द्रनिर्माणम्।

**राष्ट्रियशिक्षानीतिः ( 1986 )-स्त्रीशिक्षा-**

• 1951-1981 स्त्रीशिक्षासाक्षरता 7.93% तः 24.82% बर्धिताः। प्रधानतया समानतायै कार्यं कृतम्। प्रारम्भशिक्षा अनिवार्या। 15-35 आयुष्मतीनां स्त्रीणां कृते प्रौढशिक्षा देया। व्यावसायिकतकनीकिवृत्तिशिक्षाप्रौद्योगिकीशिक्षासु स्त्रीणां प्रवेशः प्रोत्साहनीयः। नीतिरियं महिलानामधिकारसम्पादने साहाय्यमाचरति। नूतनपाठ्यक्रमद्वारा मूल्यानां निर्माणं कुर्वन्ति।

**आचार्यराममूर्तिसमितिः- 1990-1 )** कक्षा 1 तः 3 पर्यन्तं पाठ्यक्रमः

शिशुकेन्द्रितं भवेत्।) अङ्गन्वाडी कार्यकर्तृणां विद्यालयशिक्षकाणां कार्यसमन्वयीकरणम्। 3) महिलाशिक्षिकाणां संख्या वर्धनीया। पृथक् विद्यालयस्थापना, यातायात-व्यवस्थाकरणम्।) सहशिक्षाविद्यालयेषु स्त्रीशिक्षिकाणां नियुक्तिः अधिका स्यात्। 5) उच्चशिक्षायै छात्रवृत्तिदानम्, व्यावसायिकशिक्षायाः प्रोत्साहनम्।

**राधाकृष्णन् आयोगः- 1948-49**

वर्तमानशिक्षापद्धतिः या वर्तते सा पुरुषाधारिता अस्तीत्यतः स्त्रीणां दैनिकजीवनस्य व्यावहारिकसमस्यानां समाधानं कर्तुं, ताभ्यः योग्यताप्रदानं न करोतीति अभिप्रायः। उक्तमस्ति बालिकाभ्यः पृथक् विद्यालयाः स्थापनीयाः, ताः विशेषतया पोषणीयाः इति।

स्त्रीशिक्षायै अन्ययोजनाः- **1. श्यापट्टाभियानम्-** भाविनिकाले शिक्षकेषु-स्त्रीणां कृते 50 प्रतिशतं स्त्रियः स्युः इति निर्णयः जातः।

**2. बालिकानामावासव्यवस्था-** माध्यमिकशिक्षायां पठ्यमानाः बालिकाः लाभान्विताः स्युः इति आशयः।

**3. बालिकाभ्यः अनौपचारिकशिक्षाकेन्द्राणि-** MHRD अधीने इमानि-शिक्षाकेन्द्राणि बालिकानां कृते एव कार्यं निर्वहन्ति। 90% धनसाहाय्यमपि कुर्वन्ति। आभारते 1.18 लक्ष्यपरिमितानि केन्द्राणि सन्ति। वस्तुतः 2.41 लक्षपरिमितंकेन्द्राणिसन्ति।

**4. नवोदयविद्यालयबालिकाशिक्षा-**स्त्रीभ्यः 31% प्रवेशः निश्चितः।

**5. सम्पूर्णस्त्रीसाक्षरताभियानम्-** पुरुषेभ्यः स्त्रीणां साक्षरता न्यूना एव। तत् अपाकर्तुम् अभियानमिदं शतप्रतिशतं कार्यं निर्वहति। प्रौढशिक्षा चात्रप्रधानं स्थानमावहति।

**6. उच्चशिक्षायां पृष्टपोषणम्-**सर्वक्षेत्रेषुसमानाधिकारकल्पनम्।

**7. यूनिसेफ् स्त्रीश्रामिकविद्यापीठम्-** दशश्रमिकाध्ययनसंस्थानानां कृते धनराशिसाहाय्यमाचरितवन्तः। प्रौढशिक्षाकेन्द्रद्वारा 1000 महिलाः तत्र शिक्षामधि गच्छन्ति।

**स्त्रीणामुन्नत्यै NCERT कार्यम्-** स्त्रीणां कृते प्रारम्भिककाले शिक्षा देया नवेतिविषये परिषदा एकं कार्यमाचरितम्। स्त्रीशिक्षायाः प्रशिक्षणनियमावल्याः निर्णाणम्-विद्यालयपाठ्यपुस्तिकासु लिङ्गभेदज्ञानदानम्। स्त्रीपुरुषयोः समानतायाः विषये उल्लिखितमस्ति। ग्रामीणबालिकाभ्यः प्राथमिक-शिक्षादानविषये दिशानिर्देशः कृतः। आभारते लिङ्गसंवेदनशीलतायाः विषये कार्यशाले द्वे सञ्चालिते। देहल्यामेकं, वेस्टबेन्गाल्प्रान्ते च। इत्थं NCERT बालिकाशिक्षायाः उनत्यै कार्यं निर्वहति।

**अभिनवाधिकाराः-**परिवर्तनकालेऽस्मिन् बहुभिः आयोगैः, समितिभिश्च

स्त्रीणां संरक्षणं, साक्षरतावर्धनं, शैक्षिकदिशाभिवृद्धिः, सर्वविधक्षेत्रेषु प्रोत्साहः जायमानः दृश्यते। समये समये नूतनविचारप्राप्तिः, अधिकारोल्लेखः तस्य पालनं बहुमुखरूपेण तासां विकासः क्रियमाणः वर्तते। कुविचाराः, कुनीतयः चापाकृत्य, ताः संरक्षयन्तः शान्तिमयजीवनाय, अध्ययनाय च कुत्रापि अवरोधः न स्यादिति धिया अधिकाररक्षणादीनि प्रदाय तासां पालपोषणं क्रियते अधुना। ते चाधिकाराः यथा–

- Child Marriage.
- Domestic Violence.
- Domestic Workers.
- Gender Equality.
- Labour Rights in the Garment Industry.
- Sexual Violence and Rape.
- Women and Armed Conflict.
- Women's Health and FGM.

इत्थं साम्प्रतिकभारते स्त्रीशिक्षायै, रक्षायै सर्वतोमुखाभिवृद्धये च सर्वे यतमानाः दृश्यन्ते। अन्योन्यसहकारेण स्त्रीपुरुषाः, सर्वकारः, नैकाः शासकेतरसंस्थाः NGOS च कार्ये मग्नाः सन्ति। साररूपेण अयं विचारः आयाति संसारस्य सञ्चालने पुरुषः एव प्रधानः नास्ति स्त्रीणां प्राधान्यं निश्चप्रचमस्ति इति ज्ञायते। यथा एकेन चक्रेण रथो यथा न यातुमर्हति तथैव संसारे स्त्रिया विना समाजचक्रमिदमग्रेगन्तुं न शक्नोति। अतः स्त्रीणामग्रगमनं तासां प्रोत्साहनम् अत्यन्तावश्यकम्।

## इतिशम्

**परिशीलितग्रन्थाः-**

1. मनुस्मृतिः
2. भारतीयशिक्षेतिहासः
3. भारतीयसंविधानम्
4. http://www.ncw.nic.in
5. http//www.india.gov.in

# पाठ्यचर्यायाः आधारभूतप्रतिमानम्

-डॉ. जितेन्द्रकुमाररायगुरुः
सहायकाचार्यः, शिक्षाशास्त्रविभागः
सौम्यापरिसरः, मुम्बापुरी

**प्रस्तावना-**

प्रत्येकं विद्यालयस्य शिक्षणाधिगमप्रक्रियां सफलीकर्त्तुं शिक्षकस्य अतीव भूमिका वर्तते। सामान्यतः विद्यालयस्य पाठ्यचर्यापरिवर्त्तनस्य मुख्यघटकाः शिक्षक-विद्यालय-समुदायविशेषाश्च भवन्ति। सर्वेषु विद्यालयेषु पाठ्यचर्यायाः विकासः निम्नस्तरात् उच्चस्तरपर्यन्तं भवति। पाठ्यचर्यायां परिवर्त्तनाय इदमावश्यकं यत् तस्य समाजस्य जनाः तं परिवर्त्तनमात्मसात्कृत्वा परिवर्त्तितपाठ्यचर्यामाध्यमेन तेषां सूतानां भविष्यं निर्माणं कुर्युः। अस्य प्रतिमानस्य निर्माणं, विकासः, उत्पत्तिश्च स्वस्मिन् पूर्णं भवति। प्रत्येकम् अध्यापकः अस्य प्रतिमानस्य प्रक्रियां क्रियान्वयनाय प्रयत्नं करोति। अस्मिन् प्रतिमाने अध्यापकाः, अभिभावकाः, छात्राः, विभिन्नसमुदाय-विशेषाश्च अन्तर्भवन्ति। ते यथावसरं प्रतिमानविषये, पाठ्यचर्यानिर्माणे, संशोधने च स्वाभिमतं प्रदातुं शक्नुवन्ति। निश्चप्रचमिदं वक्तुं शक्यते यत् प्रतिमानमिदं जनैः जनानां जनेभ्यः च भवति। एतदतिरिच्य अस्य प्रतिमानस्य प्रयोगं पाठ्यचर्यायाः समस्यानां समाधाने, विभिन्नसमुदायस्यावश्यकतानां सम्पूर्त्तये च भवति। अतः छात्रकेन्द्रितप्रतिमानं वर्तते। यद्यपि प्रतिमानमिदं छात्रकेन्द्रितं तथापि मुक्तप्रतिमानत्वेन स्वीकर्त्तुं शक्यते। अत्र सर्वे अध्यापकाः, छात्राः, अभिभावकाः च सम्भूय उपविश्य कार्यं कर्त्तुं शक्नुवन्ति। अस्य प्रतिमानस्य प्रतिपादकः हिल्दाताबामहोदयः वर्त्तते। हिल्दाताबामहाशयः पाठ्यचर्यायाः प्रारूपविकासे मूल्याङ्कनस्य महती भूमिका वर्तते इति स्वीकरोति। अत्र मूल्याङ्कनस्यार्थः शिक्षणायामः भवति। ब्लूममहोदयेन मूल्याङ्कनस्य यः अर्थः प्रदत्तः, सोऽपि अर्थः हिल्दाताबामहोदयेन स्वीकृतः। तेन मूल्याङ्कनम् इत्थं परिभाषितम् - विद्यालये छात्राणां विकासाय, तेषां व्यवहारसम्बन्धितप्रभावान् एकत्रीकरणं प्रभावाणां मापनप्रक्रिया च भवति मूल्याङ्कनम्। अनेन स्वस्य व्यापकमूल्याङ्कनपाठ्यचर्या-प्रतिमानस्य चत्वारि सोपानानि उल्लेखितानि। यथा-

**1. उद्देश्यानां निर्धारणम्**-अस्मिन् सोपाने शिक्षायाः उद्देश्यदृष्ट्या पाठ्यचर्यायाः मूल्याङ्कनं क्रियते। अत्र ज्ञानात्मक-भावात्मक-क्रियात्मक-सृजनात्मकोद्देश्यसंयुतप्रमाणान्

एकत्रीकृत्य शैक्षिकोद्देश्यानां निर्धारणं क्रियते।

**2. शिक्षणाधिगमक्रियायाः कृते प्रमाणम्**-अस्मिन् सोपाने शिक्षणविधि-प्रविधि-पाठ्यसामग्रीणां प्रयोगं कृत्वा अधिगमार्थं परिस्थितयः उत्पाद्यन्ते, अधिगमानुभवार्थं प्रमाणानि एकत्रीक्रियन्ते।

**3. अधिगमप्रभाविघटकानां कृते प्रमाणम्**-शिक्षणे बहवः घटकाः सन्ति, ये अधिगमप्रक्रियां प्रभावयन्ति। तादृशानां घटकानां कृते प्रमाणानि एकत्रीक्रियन्ते।

**4. उद्देश्यसम्बन्धितच्छात्राणां व्यवहाराय प्रमाणम्**- अन्तिमे सोपाने पाठ्यचर्यायाः सार्थकतायाः परीक्षणमुद्देश्यैः क्रियते। परीक्षणस्य स्वरूपम् उद्देश्यैः सह संयुक्तं भवति। अतः व्यवहारस्य परिवर्त्तनप्रमाणानि एकत्रीक्रियन्ते। एतैः प्रमाणैः पाठ्यचर्यायाः संशोधनं क्रियते।

हिल्दाताबामहोदयेन एतेषां सोपानाधारेण पाठ्यचर्यायाः प्रारूपाय तुरीयावस्था प्रोक्ता। इमाः अवस्थाः–

1. मूल्याङ्कनाय आवश्यकप्रदत्तानां स्वरूपस्य निर्धारणम्।
2. आवश्यकप्रक्रियायाः चयनं, तस्याः स्वरूपस्य निर्माणम्।
3. आवश्यकपरिवर्त्तनसंयुक्तप्राक्कल्पनाविकासाय प्रदत्तानां विश्लेषणम्।
4. प्राक्कल्पनां कार्यरूपेण परिवर्त्तनम्।

इत्थमस्मिन् प्रतिमाने अवस्थायाः सोपानस्य वा अनुसरणं कृत्वा प्रमाणस्याधारेषु पाठ्यचर्यायाः विकासः संशोधनञ्च क्रियते।

**आधारभूतप्रतिमानस्यार्थः–**

आधारभूतप्रतिमानस्यार्थः भवति शिक्षाप्रक्रियायां समागतानां विविधप्रकाराणां समस्यानां मुख्यं कारणं परिज्ञाय तस्यैव कारणस्य निराकरणम्। शिक्षा एका सततप्रक्रिया वर्तते अस्यां प्रक्रियायां समस्याः दरीदृश्यन्ते। किन्तु एतासां समस्यानां समाधानाय अनेनैव प्रतिमानेन प्रयत्नः विधीयते। अनेन प्रतिमानेन समस्यायाः मूलकारणस्य परिभाषीकरणाय प्रयासः क्रियते। अदः प्रतिमानं समस्यायाः मूलतत्त्वस्यान्वेषणाय यत्नं करोति। किञ्च समस्यायाः मूलकारणस्य प्राक्कल्पनामपि करोति। अतः एनं प्रतिमानं Grass root Model इति कथ्यते। यदा अध्यापकः पाठ्यचर्या अपूर्णेति अनुभवति, तदा अस्य प्रतिमानस्य विकासेन सहैव पाठ्यचर्यायाः विकासं करोति। प्रतिमानेऽस्मिन् प्रशासनस्य मुख्यकार्यं भवति अभिप्रेरणप्रदानम्। पाठ्यचर्यायाः परिवर्त्तनम् अध्यापकः वैयक्तिकरूपेण करोति। किञ्च यः पाठ्यचर्याप्रतिमानं निर्माति सः अन्यान् अध्यापकान् कर्मण्यस्मिन् सम्मेलयितुं

शक्नोति। पाठ्यचर्यासम्बन्धितनीतिनिर्धारणं विद्यालयेन प्रशासकीयजनैः वा कर्त्तुं शक्यते। अत्र सर्वकारस्य न किमपि योगदानं वर्तते। एतस्य प्रतिमानस्य विकासं यदा सम्भवति तदा अध्यापकेषु विद्यालयेषु वा तादृशी विशिष्टा योग्यता भवेत्। येन ते एनं प्रतिमानं व्यवस्थितरूपेण विकासयितुं शक्नुवन्ति। एतादृशी योग्यता तस्मिन् भवति यः अस्य प्रतिमानस्योपयोगं कृत्वा अग्रेसारयितुं शक्नोति। यद्यपि पाठ्यचर्याविकासे विचारोऽयं नवीनः वर्तते तथापि सिद्धान्तोऽयं प्राचीनः वर्तते एतस्य प्रतिमानस्य विकासः हिल्दाताबामहोदयेन कृतः। एतत् प्रतिमानं प्रमुखरूपेण अध्यापकस्य भूमिकां स्वीकरोति, न तु अन्येषामिति प्रमुखः दोषः वर्तते एतस्य प्रतिमानस्य।

**ताबाप्रतिमानम्–**

अस्य मतानुसारं ये पाठ्यचर्यायाः प्रयोगं कुर्वन्ति तै एव पाठ्यचर्यायाः अभिकल्पनं कुर्वन्ति। अध्यापकः स्वीयच्छात्रेभ्यः शिक्षणाधिगमसामग्रीणां निर्माणं कुर्यात्। निगमनात्मकोपागमस्य स्थाने आगमनात्मकोपागममाध्यमेन विशिष्टात् सामान्यस्य प्रयोगं कृत्वा सामान्यपाठ्यचर्यायाः प्रारूपं निर्माणं कर्त्तव्यम्। हिल्दाताबामहोदयेन स्वीयपाठ्यचर्यायोजनायाः आधाभूतप्रतिमानस्य सप्त सोपनानि निर्दिष्टानि। इमानि सोपानानि यथा–

- आवश्यकतायाः निर्धारणम्।
- उद्देश्यानां निर्माणम्।
- विषयवस्तूनां चयनम्।
- विषयवस्तूनां सङ्गठनम्।
- अधिगमानुभवानां चयनम्।
- शिक्षणानुभवानां सङ्गठनम्।
- मूल्याङ्कनञ्चेति।

**आधारभूतप्रतिमानस्य गुणाः–**

- विशिष्टसमस्यायाः समाधानम्।
- राष्ट्रियावश्यकतायाः महत्त्वम्।
- व्यापकप्रतिमानम्।
- शैक्षिकप्रक्रियायां साहाय्यप्रदानम्।
- स्थानीयपरिस्थितीनां महत्त्वम्।

- छात्रकेन्द्रितप्रतिमानम्।
- सुपरिणामप्रदानम्।
- अध्यापकाः सारल्येन स्वीकुर्वन्ति।
- प्राविधिकदृष्टिकोणाधारितप्रतिमानम्।

**आधारभूतप्रतिमानस्योपयोगः-**

अध्यापकेन आधारभूतप्रतिमानस्य कक्षायामोपयोगः इत्थं क्रियते-

• ताबामहोदयः विश्वसति यत् कक्षायां छात्रेभ्यः यः शिक्षां प्रददाति, सः पाठ्यचर्यायाः विकासस्योत्तरदायित्वं स्वीकुर्यात्।

• अध्यापकः छात्राणां विकासाय एकेन मुख्यान्वितिना शिक्षणाधिगमप्रक्रियां चालयति, सा प्रक्रिया निम्नस्तरात् आरभते।

• आधारभूतप्रतिमाने अध्यापकः आगमनविधेः उपयोगं करोति, येन पाठ्यचर्यायाः विकासः समुचिरूपेण भवति।

• आधारभूतप्रतिमाने अध्यापकस्य विशिष्टं महत्त्वं वर्त्तते। यतो हि पाठ्यचर्यायाः विकासे तस्य महत्त्वपूर्णा भूमिका भवति।

• पाठ्यचर्याविकासप्रक्रियायाम् अध्यापकस्य नवज्ञानेन अनुभवेन च पाठ्यचर्या नवीनां दशां प्राप्नोति।

• आधारभूतप्रतिमानम् अध्यापकं ज्ञान-सूचनयोः मुख्यकारणं मनुते। यस्याः पाठ्यचर्यायाः विकासे पूर्णं नियन्त्रणं भवति।

• अध्यापकः अधिगमोद्देश्यानां प्राप्तये निर्णयस्वीकरणे स्वतन्त्रः भवति। सः छात्रान् विभिन्नेषु विभागेषु विभज्य अधिगमाय सन्नद्धं करोति।

अध्यापकः विद्यालये क्रियाणामायोजनं, योजनायाः क्रियान्वयनं च कर्त्तुं स्वतन्त्रः भवति। ताबामहोदयस्यानुसारम् आधारभूतप्रतिमानस्योपयोगं विभिन्नैः विषयैः साकं पाठ्यचर्यायाः विभिन्नान् प्रकारान् सम्मील्य कर्त्तुं शक्यते। अस्य प्रतिमानस्योपयोगं प्राथमिकशिक्षातः माध्यमिकशिक्षापर्यन्तं कर्त्तुं शक्यते।

एनं प्रतिमानं सङ्गठनं कृत्वा उद्देश्य- शिक्षणपद्धति-अधिगमानुभव-विषयवस्तु-मूल्याङ्कनैः पञ्चतत्त्वैः संयोज्यते। शिक्षणाधिगमप्रणाल्याः मुख्यमुद्देश्यं पाठ्यचर्यां केन्द्रबिन्दुत्वेन निर्धारणं कृत्वा छात्रेषु प्रयोगं कर्त्तुं शक्यते। अस्मिन् अधिगमानुभवान् परिज्ञाय वास्तविकस्वरूपेण सह संयोजनीयम्। अत्र प्रत्यक्षानुभवान् विषयवस्तुना सह योज्यते। शिक्षणप्रक्रियायाः तदा विकासः भवति, यदा उद्देश्य-विषयवस्तु-अधिगमानुभवानां परिज्ञाय अध्यापकेन सङ्गठनं क्रियते। अध्यापकस्य छात्रैः सह

प्रत्यक्षसम्बन्धः भवति, न तु पाठ्यचर्यानिर्मातुः। अतः अध्यापकः स्वयं पाठ्यचर्या-विकासस्योत्तरदायित्वं स्वीकुर्यात्। अध्यापकः सूचनां विकासयितुं नियन्त्रयितुं च शक्नोति। विद्यालये क्रियाणामायोजनं कृत्वा छात्रान् भाविकार्यार्थं सन्नद्धं करोति। पाठ्यचर्याविकासप्रक्रियाम् अध्यापकः सप्तमुख्यस्तराधारेण प्रयोक्तुं शक्नोति-

1. आवश्यकतायाः निदानम्।
2. उद्देश्यानां निर्माणम्।
3. विषयसामग्रीणां चयनम्।
4. विषयसामग्रीणां सङ्गठनम्।
5. अधिगमानुभवानां चयनम्।
6. अधिगमगतिविधीनां सङ्गठनम्।
7. मूल्याङ्कनं तस्य विधयश्च।

प्रत्येकं विद्यालयाय आधारभूतप्रतिमानस्यावश्यकता वर्तते। यदि अस्य प्रतिमानस्य प्रक्रियायाः कार्यं पूर्णरूपेण कर्त्तुं शक्यते, तर्हि न केवलं छात्राणामावश्यकतायाः सम्पूर्त्तये सक्षमः, अपितु अध्यापक-अभिभावक-समुदायविशेषाणामपि आवश्यकतायाः पूर्त्तये सक्षमः भवति। किञ्च एतेन तेषां समस्यानां समाधानमपि भवति। प्रतिमानमिदं विद्यालयस्य शैक्षणिकोपलब्धिं संवर्द्धनं कृत्वा विद्यालयस्य गुणवत्तां समेधयति।

**ग्रन्थाक्रणम्**

1. पूनम मदान, पाठ्यक्रम विकास एवं आंकलन, अग्रवाल प्रकाशन, आगरा, 2017.
2. यादव, एस.पाठ्यचर्या विकास, श्रीविनोद पुस्तक मन्दिर, आगरा, 2010.
3. पाठ्यचर्या एवं अनुदेशन, इन्दिरा गाँधी राष्ट्रीय मुक्त विश्वविद्यालय, 2008.
4. Agrawal. J.C. Curriculum reforms in India, New Delhi, 1990
5. http://www.ncdc.go.ug
6. http://www.undp.org.
7. http://www.uwsp.edu.

✦✦✦

# भर्तृहरिशतकत्रये व्यक्तित्वम्

**-डॉ. महेशपाणिग्राही**

संविदा-अध्यापकः, शिक्षाशास्त्रविभागः

श्रीसदाशिव परिसरः, पुरी

विदितमेतत् समेषामपि विपश्चितां यद्वैदिकवाङ्मयेषु धर्मार्थकाममोक्षात्मक-पुरुषार्थचतुष्टयस्य विशदं वर्णनं समुपलभ्यते। सहस्रशः उदाहरणानि समाजदर्शनम्, आचरणशिक्षां, नीतिशिक्षां, लोककल्याणं च वर्णयन्ति। विज्ञानविषयप्रतिपादकानां तथ्यानां संख्याऽपि शतशो वर्तते। अत एव भगवता मनुना प्रोच्यते - **सर्वज्ञानमयो हि सः**[1]। अर्थात् सर्वेषामपि ज्ञानानां विज्ञानानाञ्च वर्णनं वैदिकवाङ्मये विद्यते।

भारतवर्षे समस्तमपि प्राचीनवाङ्मयं संस्कृतभाषामाश्रित्यैवावतिष्ठते। निखिलमपि संस्कृतवाङ्मयं वेद-रामायण-महाभारत-धर्मग्रन्थ-काव्य-नाटक-नीतिग्रन्थादिभिः परिपुष्टम्। प्राचीनानाम् ऋषीणां, महर्षीणां, कवीनां, तत्त्वज्ञानाम् अनारतश्रमस्यैव फलमेतद् यदीदृशं विपुलं संस्कृतवाङ्मयं दृष्टिपथमुपयाति। अतः महाभारते लिखितमस्ति–

**यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्।**[2]

लौकिकसंस्कृतवाङ्मये काव्यशास्त्रस्य योगदानमतुलनीयम्। सांसारिकानुभूतिं जीवनदर्शनाभिमुख्यं मनुष्यस्य कर्त्तव्यं च स्वदृष्ट्या स्थापयित्वा नीतिशतकम्, श्रृङ्गारशतकम्, वैराग्यशतकञ्चेति शतकत्रयं रचितवान् महर्षिभर्तृहरिः। शतकत्रयाधारेण व्यक्तित्वं कीदृशं भवेदिति विचार्यते।

**व्यक्तित्वम्–**

आधुनिकानां मते व्यक्तित्वं नाम नैको गुणः अथवा धर्मः। तच्च बहूनां प्रकृतिविशेषाणां समुदायः, तादृशसमुदायात् निष्पन्नः कश्चनभावविशेषो भवति। उत्तरदायित्वम्, साहसम्, मैत्री, धैर्यमित्यादयः मानवप्रकृतिविशेषेषु केचन गुणाः। प्रकृतिविशेषाणां समन्वयेन कथं वा व्यक्तित्वस्य निर्धारणं जायते इति हरिणा

---

1. मनुसंहिता- 2/7
2. महाभारतस्यादिपर्वः- 62/63

उदाहरणैः निरुपितम्। यथा–

**पद्माकरं दिनकरो विकचीकरोति।**
**चन्द्रो विकासयति कैरवचक्रवालम्।।**
**नाभ्यर्थितो जलधरोऽपि जलं ददाति।**
**सन्तः स्वयं परहिते सुकृताभियोगाः।।**[1]

अत्रायं भावः– ये जनाः परहिताय अभ्यर्थिभ्यः आत्मविनियोगं कुर्वन्ति ते श्रेष्ठाः भवन्ति। तेषां व्यक्तित्वं सर्वोच्चस्थाने भवति। अन्ये सर्वे तान् अनुकुर्वन्ति। यथा– याचनां विनापि सूर्यः चन्द्रश्च क्रमेण कमलानां– कुमुदानाञ्च विकासं कृत्वा सर्वेषां कृते पूजार्हौ भवतः।

सज्जनाः अन्येषां हितं चिन्तयन्ति। उदारभावनायाः साक्षात् मूर्त्तिस्वरूपाः भवन्ति एते सज्जनाः। कियती उदारता वर्तते सज्जनानां मनसीति प्रतिपादयितुं भणितं हरिणा–

**परगुणपरमाणुन् पर्वतीकृत्य नित्यं।**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।।**[2]

किञ्च व्यक्तेः स्थानभेदेन कार्यभेदोऽपि जायते। व्यक्तित्वस्य सम्पूर्णभिन्नता द्रष्टुं शक्यते इत्याशयः। स्पष्टार्थं भणितम्–

**सन्तप्तायसि संस्थितस्य पयसो नामाऽपि न ज्ञायते**
**मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।**
**स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते**
**प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो देहिनाम्।।**[3]

अर्थात् जलस्य स्वभावः शीतलः, परन्तु सन्तप्लोहपिण्डोपरि पतने बाष्परूपं, कमलपत्रे मुक्ताकारकं, स्वातीनक्षत्रे शूक्तिकामध्ये पतितं मौक्तिकं भवति, तथैव मनुष्याणां व्यक्तित्वमपि स्थानभेदेन, अन्यप्रभावेन च भिद्यते।

कार्यारम्भे मानवाः भिन्नं भिन्नं मतं पोषयन्ति स्व स्व व्यक्तित्वाधारेण। विघ्नभयेनाधमजनः कार्यं नानुष्ठीयते, मध्यमः मध्ये कार्यं त्यजति। परन्तु उत्तमः विघ्नसत्वेऽपि कार्यात् न विरमति। अतः सिध्यति भिन्नव्यक्तित्वधारी भिन्नं चिन्तयतीति। उक्तम्–

---

1. भर्तृहरिनीतिशतकम्- 74
2. भर्तृहरिनीतिशतकम्- 79
3. भर्तृहरिनीतिशतकम्- 67

**प्रारभ्यते न खलु विघ्नभयेन नीचैः,**
**प्रारभ्य विघ्नविहिता विरमन्ति मध्याः।**
**विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,**
**प्रारब्धमुत्तमजना न परित्यजन्ति।।**[1]

व्यक्तित्वाधारेण मानवान् चतुर्धा विभाजयितुं शक्यते। एकन्तु उत्तमपुरुषः, यः स्वार्थान् परित्यज्य अन्यमुपकरोति। द्वितीयः सामान्यपुरुषः यः स्वार्थसाधनपूर्वकं परार्थं साधयति। तृतीयः राक्षसः, यः स्वार्थाय परहितं नाशयति। चतुर्थस्य संज्ञा नास्ति। सः परहितकारणमपि ध्वंसयति। अतः कविना निगदितम्–

**एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये**
**सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।**
**तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये**
**ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे।।**[2]

मानवेषु केचन विवेकशून्याः भवन्ति। प्रत्येकं कार्ये तेषां पतनं जायते। अधोगतिं प्राप्नुवन्ति। अतः कविना उक्तम्–**विवेकभ्रष्टानां भवति विनिपातः शतमुखः**[3] **इति।** तथापि ते वृथा स्वदक्षतां प्रदर्शयन्ति। परन्तु दक्षता तु मानवगतविशिष्टधर्मविशेषः। संगीत - साहित्य - कलादिमाध्यमेन तस्याः प्रदर्शनं जायते। विद्या - तप - शीलादिगुणैः दक्षता वर्धिता भवति। येषां पार्श्वे एते विशिष्टगुणाः न सन्ति, तेषां व्यक्तित्वं पशुतुल्यम्। अत उक्तम्–

**येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति।।**[4]

श्लोकात् प्रतीयते यत् उपर्युक्तगुणविहीनाः केवलं मनुष्यशरीरधारिणः भवन्तीति। पुनश्च पशुवत् व्यवहर्तृणां मानवानां स्वभावः दुर्जनवत्। ते स्व पराक्रमप्रदर्शनार्थं तेजस्विनं पीडयन्ति। भर्तृहरिणा लिखितं यत् - द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ[5]। अर्थात् राहुः चन्द्रमसं सूर्यञ्च क्रमेण पूर्णिमायाममावस्याञ्च पीडयति।

खलु शतचेष्टयाऽपि दुर्जनानां सन्मार्गे प्रवृत्तिः दुर्लभा इति भर्तृहरेराशयः।

---

1. भर्तृहरिनीतिशतकम्- 27
2. भर्तृहरिनीतिशतकम्- 75
3. भर्तृहरिनीतिशतकम्- 01
4. भर्तृहरिनीतिशतकम्- 13
5. भर्तृहरिनीतिशतकम्- 34

भणितं यत्- नेतुं वाञ्छति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः।[1] आधुनिकाः अपि तथैव वदन्ति "यस्य यथा चिन्ताधारा तां परिवर्तयितुं न शक्नुमः"। अर्थात् व्यक्तेः व्यक्तित्वं प्रायतः पूर्णरूपेण परिवर्तयितुं न शक्यते इति भावः। कदाचित् औपचारिकार्जितगुणानामांशिकपरिवर्तनं कर्तुं शक्यते। उदाहरणरूपेण कविना उक्तं–

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।**

**यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः।।**[2]

प्राणिमात्रेषु दयाहीनत्वं, परधने स्त्रियां च स्पृहा इत्यादिगुणान् परिवर्तयितुं न शक्यते। कारणं दुरात्मनाम् एते प्रकृतिसिद्धगुणाः। अतः कविना उक्तम्–

**अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा।**
**सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम्।।**[3]

एकैकोऽपि मानवः स्वासाधारणया प्रक्रियया कार्यं करोति, अन्यैः सह व्यवहरति च। एवं क्रियमाणः व्यवहारः व्यक्तित्वं प्रकाशयितुमलं भवति। यथा ग्रन्थकारैः स्पष्टितम्–

**क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टां दशा-**
**मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि।**

**मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहाः**
**किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी।।**[4]

अस्मात् ज्ञायते स्वाभिमानी जनः कष्टेन स्थित्वाऽपि आत्मसम्मानं न त्यजति। सिंहवत् स्वमार्गे तिष्ठति। कदापि न्यायमार्गं न परित्यजति। अतः तस्य स्थिरव्यक्तित्वस्य इदमेकमुदाहरणम्।

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु।**
**प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः।।**[5]

अस्मात् श्लोकात् ज्ञायते यत् व्यवहारमाध्यमेनैव प्रकृतव्यक्तित्वमाकलयितुं शक्यते। पराक्रमः सिंहानां प्रकृतिः। अतः सिंहशिशोरपि पराक्रमं प्रदर्श्य तस्य

---

1. भर्तृहरिनीतिशतकम्- 06
2. भर्तृहरिनीतिशतकम्- 08
3. भर्तृहरिनीतिशतकम्- 52
4. भर्तृहरिनीतिशतकम् - 29
5. भर्तृहरिनीतिशतकम्- 38

व्यक्तित्वस्य निदर्शनं प्रयच्छति।

**सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम्।**
**आपत्सु च महाशैलशिलासङ्घातकर्कशम्।।**[1]

अत्रायमाशय: दृढ़व्यक्तित्वधारिण: विपत्सु सम्पत्सु वा धैर्येण तिष्ठन्ति। विपत्सु कठोरं सम्पत्सु कोमलं भवति तेषां हृदयम्। नम्रता - क्षमा - सहनशीलतादिस्वाभाविकगुणै: विमण्डितं भवति तेषां व्यक्तित्वम्।

व्यक्तित्वमित्युक्ते क्वचित् मानवानां शोभनमाकारमपि सूचयति इति आधुनिका: वदन्ति। बहुकालात् प्रागेव हरिणा तत्रावधानं दत्तम्। सौन्दर्ययुक्तानां नारीणां व्यक्तित्वं प्रसङ्गावसरे उदाहरणरूपेण उपस्थापितम्। उक्तं यत्-

**स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणै:।**
**वचोभिरीर्ष्याकलहेन लीलया समस्तभावै: खलु बन्धनं स्त्रिय:।।**[2]

अर्थात् सौन्दर्ययुक्तनार्य: स्मितहास्येन, नेत्राकुञ्चनेन च पुरुषं बन्धयन्ति। तासां व्यक्तित्वं तथैव।

व्यक्तित्वाधारेण सर्वे समाना: न भवन्ति। यावन्त: मनुष्या: तावन्त: व्यक्तित्ववन्त: इति वक्तुं शक्यते। मनुष्याणां स्वभावभेदेन व्यक्तित्वभिन्नताविषये स्पष्टं प्रत्यपादयत्। अत: भणितम्-

**वैराग्ये सञ्चरत्येको नीतौ भ्रमति चापर:। श्रृङ्गारे रमते कश्चिद्भुवि भेदा: परस्परम्।।**[3]

व्यक्तित्वभिन्नताकारणात् मनुष्याणां मध्ये एक: वैराग्यमभिलषति चेत् अपर: नीतौ भ्रमति। पुन: कश्चित् शृङ्गारे रमते। एवं प्रकारेण भेद: दृश्यते मनुष्याणां व्यक्तित्वे।

योगिनां व्यक्तित्वं भिन्नमिति भर्तृहरि: वैराग्यशतके प्रत्यपादयत्। वैराग्यशत-कस्यानेकेषु प्रतिपादितं वर्तते अस्मिन् विषये। उक्तं यत्-

**पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-**
**मादाय न्यायगर्भद्विजमुखहुतभूग्भूमधूम्रेपकण्ठम्।**

---

1. भर्तृहरिनीतिशतकम्- 66
2. भर्तृहरिश्रृङ्गारशतकम्-02
3. भर्तृहरिश्रृङ्गारशतकम्-99

**द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो**
**मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः॥**[1]

अर्थात् योगिनः स्वकीयजने याचनापेक्षया भिक्षया जीवनं वरमिति आमनन्ति। पथिगमनसमये जल्पमुखरैः जनैः क्रुद्धाः न यान्ति। वर्णभेदं जातिभेदं वा न प्रदर्शयन्ति। मनोविज्ञानज्ञातारः भवन्ति। स्वात्मनः वैराग्यं कामयन्ति। अतः ज्ञानोदयवशात् मनः सुखातिरिक्तं सर्वं तुच्छमामनन्ति। सम्पूर्णजगत् तृणस्वरूपं कल्पयन्ति।

सम्पूर्णशतकत्रयं विश्लेषयामश्चेत् व्यक्तित्वस्योदाहरणानि प्राप्स्यामः। यथा आधुनिकमनोवैज्ञानिकैः संज्ञारूपेण परिभाषारूपेण वा व्यक्तित्वस्यार्थः प्रतिपादितः, ततोधिकः शतकत्रये श्लोकरूपेण वर्णितः हरिणा। नारी- पुरुषयोः व्यक्तित्वे भेदः, व्यक्तित्वस्य चतुर्धाविभाजनम्, योगिनां व्यक्तित्वमित्यादयः विषयाः स्पष्टरूपेण स्वकृतिषु समचर्चि।

**उपसंहारः-**

इत्थमुपरितनपृष्ठेषु भर्तृहरेः शतकत्रयं सम्यगधीत्य तत्रस्थ व्यक्तित्वस्वरूपं विमृष्टम्। विमर्शने ज्ञातं भर्तृहरिः न केवलं साहित्यिकः, वैयाकरणः वा, अपितु सः शिक्षाशास्त्रज्ञः, मनोवैज्ञानिकः, दार्शनिकश्च।

आधुनिकमनोवैज्ञानिकाः केवलं प्रयोगशालायां गत्वा सिद्धान्तानां प्रमाणं कुर्वन्ति। परन्तु मूलभूतसिद्धान्तानाम् जडं संस्कृतवाङ्मयमेव। मनोवैज्ञानिकतत्त्वविषये यथा आधुनिकाः वदन्ति, तथैव शतकत्रयेऽपि लिखितमस्ति। भेदः प्रायतः न दृश्यते।

1. भर्तृहरिवैराग्यशतकम्-56

# शुक्लयजुर्वेदे रुद्रदेवस्योपासनापद्धतयः शिक्षणविधयश्च

**-शिवसाधनदेवनाथः**

शोधच्छात्रः,

एकलव्यपरिसरः, अगरतला

'यजुः' शब्दो यज् धातोः निष्पन्नः। अस्य शब्दस्य व्युत्पत्यनुसारेण यज्ञानुष्ठानेन सह तस्य घनिष्ठसम्बन्धं सूचयति- 'यजुर्यजतेः' इति निरुक्तम्।[1] यजुः संहिता पद्यगद्यात्मरूपेण उपलभ्यते किन्तु पद्यात्मकाः मन्त्रा ऋक्, गद्यात्मकाः मन्त्राश्च यजुः संहितायाः स्वकीयमन्त्राः भवन्ति।

यजुर्वेदो द्विप्रकारकः। कृष्णयजुर्वेदः शुक्लयजुर्वेदश्च। कृष्णयजुर्वेदशुक्ल-यजुर्वेदयोः मध्ये शुक्लयजुर्वेद अर्वाचीनः। अस्मिन् वेदे विविधज्ञानविज्ञानानि, संस्कृतेः आधाररूपाणि, विश्वहितसाधनानि, कर्तव्याकर्तव्यविषयाः, शुभाशुभनिर्देशानि, जीवनस्य अग्रगतयः, आचारसंचारकाः, सुखशान्तिसाधकाः, ज्ञानालोकप्रसारकाः, चतुर्वर्गफलप्राप्तयः विविधाः विषयाः प्रतिपादिताः सन्ति।

भारतवर्षस्य इतिहासे शैवधर्मस्य उत्पत्तौ विकासे च शुक्लयजुर्वेदस्य अतीव महत्वं स्थानं विद्यते। अस्य वेदस्य षोडशोऽध्यायः रुद्राध्यायः इति नाम्ना अभिधीयते। शुक्लयजुर्वेदीयब्राह्मणगणाः प्रत्यहं रुद्राध्यायं पाठयन्ति। अस्याः संहितायाः रुद्राध्याये रुद्रो युगवत् शिवः, शंकरः, शम्भुश्च प्रभृतिभिः रूपैः आलोच्यते। तद् निगदितं शुक्लयजुर्वेदे-

**"नमः शम्भवाय च मयोभवाय च।**
**नमः शंकराय च मयस्कराय च।**
**नमः शिवाय च शिवतराय च।।"[2]**

अर्थात् मुक्तिस्वरूपं सुखरूपं मङ्गलकारकञ्च रुद्रं नमस्कारः। लौकिक-सुखकारकं मोक्षसुखकारकञ्च रुद्रं प्रणामः। यः कल्याणरूपः भक्तजनानां कल्याणकारकश्च तं रुद्रं नमस्कारः। अतः एतस्मात् मन्त्रात् इदं वक्तुं शक्नोमि

---

1. निरुक्तम् 7.12.4
2. शुक्लयजुर्वेदः 16.41

एकस्मात् शब्दात् बहूनां शब्दानां शिक्षणं भवति। मन्त्रेऽस्मिन् शिव-शंकर-शम्भुश्च प्रत्येकमेकस्य शब्दस्यार्थः कल्याणवाचकमेव।

यत्र धर्मः अस्ति तत्र अस्ति शिक्षणम्। प्रपञ्चेऽस्मिन् धर्मस्य मूलरूपं वेदो वर्तते। विषयेऽस्मिन् मनुना उक्तं- "वेदोऽखिलो धर्ममूलम्।"[1] अतः वेदेषु एव निहिताः सन्ति गणितविषयाः, अर्थशास्त्रविषयाः, काव्यशास्त्रविषयाः, दार्शनिकविषयाः, राजनैतिकविषयाः, सामाजिकनियमाः, आध्यात्मिकविषयाः, वैज्ञानिकविषयाः विविधशिक्षणविषयाश्च।

शुक्लयजुर्वेदे रुद्रस्योपासनायां दृश्यते आदानप्रदानयोः शिक्षणविधिः। जटाधारीणां वीरगणानां निवासभूताय रुद्राय स्तुतिः प्रदानं क्रियते, आदानरूपेण च कामनां कुरुते सुस्वास्थ्यं सुखञ्च। तदुक्तञ्च-

**इमा रुद्राय तवसे कमर्दिने क्षयद्वीराय प्रभरामहे मतीः।**
**यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्।।**[2]

आदानप्रदान-व्यापार-वाणिज्यानां शिक्षणविधयः अपि प्राप्तुं शक्यते शुक्लयजुर्वेदे-

**देहि मे ददामि ते नि मे धेहि नि ते दधे।**
**निहारं च हरासि मे निहारं नि हराणि ते स्वाहा।।**[3]

जातस्य हि मृत्युः इति दार्शनिकशिक्षणं रुद्राध्यायस्य मृत्युञ्जयमन्त्रे लक्ष्यते। भगवन्तं त्र्यम्बकम् अर्थात् रुद्रं प्रार्थनां क्रियते यथा उर्वारुकफलं पक्वकाले वृन्तात् च्युतं भवति तथैव पुनर्जन्म न कृत्वा मृत्युवन्धनात् मुक्तिलाभं कर्तुमिच्छन्ति। तदुक्तञ्च-

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।**
**उर्वारूकमिव बन्धनान् मृत्योर्मुक्षीय माऽमृतात्।।**[4]

छन्दज्ञानाय गणितशिक्षणमावश्यकमस्ति। रुद्राध्याये रुद्रदेवं छन्दःस्वरूपेण स्तुतिं कृत्वा द्विपदा-त्रिपदा-चतुष्पदा-षट्पदाश्च इत्यादिभिः शब्दैः स्तुतिं कुरुते। एतेषां शब्दानां ज्ञानं गणितशिक्षणेन सम्भवो भवति। तद् निगदितम्-

**द्विपदा या चतुष्पदा स्त्रिपदा याश्च षट्पदाः।**
**विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तुत्वा।।**[5]

---

1. मनुसंहिता 2.6
2. शुक्लयजुर्वेदः 16.48
3. शुक्लयजुर्वेदः 3.50
4. शुक्लयजुर्वेदः 3.60
5. शुक्लयजुर्वेदः 23.34

काव्यशैल्या: शिक्षणविधिविषये अपि अस्मिन् वेदे मनोरमवर्णनं दृश्यते। नीलकण्ठरक्तिमवर्णयुक्तसूर्यरूपरुद्रदेव: अस्तकाले शनैः शनैः गमनं कुरुते। तस्मिन् समये गोपालगणाः तस्य रूपस्य दर्शनं कृत्वा आनन्देन प्रत्यावर्तनं कुर्वते। जलाहरण-कारिण्यः स्त्रीगणाः अपि रुद्रस्य अपरूपं सौन्दर्य्यं दर्शनं कुर्वन्ति। उक्तञ्च-

**असौ योऽवसर्पति नीलग्रीवो विलोहितः।**
**उतैनंगोपा अदृश्यन्नदृश्यन्नुदहार्य्यः स मृडयाति नः॥**[1]

अस्मिन् जगति संस्कृते: सभ्यतायाश्च कथमिव विकास अभूद् इत्यर्थं वेदस्य अनुशीलनम् अवश्यमेव करणीयम्। क्रमविकासस्य शिक्षणप्रक्रिया अपि शुक्लयजुर्वेदस्य माध्यन्दिनशाखायां प्राप्यते। अत्र सोमस्य संस्कारविषये ऋषिणा उक्तं वैदिकसंस्कृतिः प्रथमा संस्कृतिः। उक्तञ्च-

**आच्छिन्नस्य ते देव सोम सुवीर्यस्य**
**रायस्पोषस्य ददितारः स्याम।**
**सा प्रथमा संस्कृतिर्विश्ववारा**
**स प्रथमो वरुणो मित्रो अग्निः॥**[2]

**निष्कर्षः**- अतः निष्कर्षरूपेण कथयितुं शक्यते यद् अस्मिन् निखिले जगति सर्वेषु क्षेत्रेषु ये शिक्षणविषयाः सन्ति ते विषयाः वेदेषु एव निहिताः सन्ति इति। अस्माकं सर्वेषां प्रथमकर्तव्यं वेदस्य पठनं तथा च तस्य संरक्षणम्। येन अग्रिमकाले सभ्यतायाः विकासो भवितुमर्हति एव।

**प्रसङ्गग्रन्थसूच्यः**


- सारस्वत, मालती। भारतीय शिक्षा का इतिहास। इलाहाबाद : न्यू कैलाश प्रकाश। 2008-09। मुद्रित।
- मनुः। मनुस्मृतिः। सं. शिवराज कौण्डिन्यायन। वाराणसी : चौखम्बा विद्याभवन, 2010। मुद्रित।
- मिश्र, गङ्गाधर। वैदिक एवं भारतीय संस्कृति। वाराणसी : चौखम्बा सुरभारती प्रकाशन। 2010। मुद्रित।
- शिवोपासनाङ्क। गोरखपुर : गीताप्रेस, 2072(सं)। मुद्रित। Code - 586.


---

1. शुक्लयजुर्वेदः 16.7
2. शुक्लयजुर्वेदः 7.14

- शुक्लयजुर्वेदीय रुद्राध्यायी। गोरखपुर : गीताप्रेस, 2073(सं)। मुद्रित। Code-1627.
- यास्कः। निरुक्तम्। सं. मुकुन्दझा शर्मा। दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान, 2012। मुद्रितम्।
- Bosu, Jogiraj, Vedera Paricaya, Kolkata : Firma KLM Pvt. Ltd.. 2009. Print. ISBN-81-7102-149-2
- Deedhiti Bishwas. "Vaidik bhāvanāya rudra". Araṇya (Ūnakoti viṣayaka viśeṣa sṃkhyā). 2011. page 7-9. print.
- Dey, Sitanath. A reflection To Our Culture Heritage Through Sanskrit Studies. Kolkata : Sanskrit Pustak Bhandar. 2005. Print.
- Śuklayajurvedīya Rudrāṣṭādhyāyī. Kolkata : Sandesh, 1421 (Bengali). Print.
- Veda (Yajurveda Saṃhitā). Kolkata : Haraph Prkāśnī, 2000. Print.

# विधिस्वरूपं प्रयोजनञ्च

-डॉ शुभश्रीदाशः

अध्यापिका, शिक्षाविभागः

वस्तुतः कस्यापि कार्यस्य साफल्यं तदीयां क्रमबद्धयोजनामाश्रीयते। लक्ष्यप्राप्तये निश्चितोद्येश्यसाधनाय च कार्यप्रणाली सुनिश्चिता स्यात्। सैव योजना इति कथ्यते। अतः कस्मादपि कार्यकरणात् प्राक् योजनाः निर्मीयन्ते। तदनुसारं कार्यं क्रियते। योजना समीचीना चेत् कार्यं समीचीनतां दधति। विना योजनया लक्ष्यशरणं कष्टायते। तदत्र कक्षाशिक्षणे। कक्षा शिक्षणेऽभिरुचिसंवर्धनाय सारल्येनावबोधनाय अवबोधाय च शिक्षाविद्भिः बहु विचिन्त्य योजनाः परिकल्पिताः। यतो हि योजनानु सारमध्यापनं भवति चेत् शिक्षकः विषयस्य समुचितोपस्थापनं कर्तुं शक्नोति। इयं योजना राक प्रणाली, पद्धतिः, विधिः वेत्युच्यते। कक्षाधिगमे विधीनां महन्महत्वमस्तीति शिक्षाविदः आदि कालादेव तान् उपायुञ्जन। भारते वैदिककालादारभ्य विधयः प्रचलिताः वर्त्तन्ते। ते विधयः प्रायः परम्परागतविधयः, आधुनिक शिक्षणविधयश्चेति द्विविधाः भवन्ति। पुराकाले भारते शिक्षणप्रक्रियायां परम्परागतशिक्षणपद्धतिः प्रचलिताऽऽसीत्। ततः परं कालक्रमेण शिक्षणे बहुविधं परिवर्तनमागतम्। विधीयते इति विधिः इत्यमरकोषः। अर्थात् येन विधानं क्रियते सैव विधिः। स च लक्ष्यप्राप्तये समीचीनमार्गविशेषः। वस्तुतः शिक्षणे विधिर्नाम स्वतन्त्राधिगमसाधनम्। यत्तु शिक्षणं सफलीकर्तुं, प्रभावयितुं छात्राणामन्तर्निहितशक्तेः विकासार्थं, शिक्षणपरिसरं रुचिकरञ्च कर्त्तुं मार्गं प्रदर्शयति, तदेव विधिरिति फलितार्थः। विधति विद्धति विश्वमिति शब्दकल्पद्रुमः। अनया व्युत्पत्या विध् - विधाने इत्यस्मात् धातोः निष्पन्नोऽयं विधि शब्दः ब्रह्मार्थं द्योतयति। अस्य जगतः सुपरिचालनाय भगवता यथा प्रयत्नः क्रियते, तदवत् शिक्षाक्षेत्रे नवीनरीत्या पठनपाठनाय यः मार्गं प्रदर्शयति, सैव विधिरिति स्पष्टार्थः। आङ्गलभाषायां Method इति शब्दः विध्यर्थे प्रयुज्यमानलातिन् भाषातः गृहीतः। यस्यार्थः भवति प्रकारः मार्गो वा। विधेः पर्यायरुपेण पद्धतिप्रणाली युक्त्यादिशब्दा उपयुज्यन्ते। पद्धति-पद्भ्यां इतिः, पादयोः आघातेन निरन्तरक्रमेण जायमानः पन्थाः पद्धतिरुच्यते। अर्थात् पद्धतिर्नाम अभीष्टप्राप्तये अनुश्रीयमाणं माध्यमं साधनं वा। प्रणालीशब्दः विधेः तुल्यार्थे प्रयुज्यते। प्रणाली नाम क्रमव्यवस्था, क्रमशिक्षणोपक्रमः, सुव्यवस्थितक्रमिकनिर्दृष्टफलादिक्रियाविधानं वा। अर्थात् कार्यविशेषसम्पादनाय समन्वितरूपेण क्रियाकरणाय सुव्यस्थितानां तत्वानां समुदायः प्रणालीति।

## विधेः प्रयोजनम्

सर्वदा जीवनेऽध्यापनस्य महत्वं स्वमहतां पोषयति। शिक्षायाः एकमात्रमुद्येश्यं भवति बालानां शिक्षणम्। तत्रानुभवयुक्तमध्यापनं चिरस्थायि भवति। अतः शिक्षणायानुभवस्यावश्यकता वरीवर्ति। यद्यपि शिक्षण परिस्थितिनिर्माणाय अनेकानि शिक्षणोपकरणान्युपयुज्यन्ते परं विधेः उपयोगः मूर्धावतंसतया स्वमहन्महत्वं सर्वदा धत्ते। यतोहि विधिभिः शिक्षाप्रदानेन शिक्षणोद्येश्यं प्राप्तुं शक्यते। शिक्षणं सफलीकर्त्तुं बहुविधेष्वप्युपायभूतसाधनेषु श्रेष्ठस्थान्माहवहत्ययं विधिः। शिक्षायां विधि शब्दस्य प्रयोगोऽध्यापकानां तासां क्रियाणां सम्पादनाय क्रियते, यासां परिणामतः छात्रा किमपि शिक्षन्ते। शिक्षणं प्रभावोत्पादकं कर्त्तृसाधनं भवति विधिः। विधिः अध्यापकस्य अनेकासां प्रक्रियाणाम् एकः समूहः। साम्प्रतिके आधुनिककाले प्रत्येकमपि शिक्षकेभ्यः विभिन्नशिक्षण-विधीनां विस्तृतज्ञानं परमावश्यकं भवति। यद्यपि सफलशिक्षणाय विषयस्तु तथा शिक्षणविधिरिति उभयोरपि ज्ञानमनिवार्यं तथापि विधीनां पर्याप्तज्ञानमपेक्षते। यतो हि विधीनां प्रभावेण विषयवस्तुनां ज्ञानं सरलं सुस्पष्टञ्च सम्पद्यतें कतिपय प्रमुखप्रयोजनानि अधः प्रस्तूयन्ते।

1. जटिलविषयस्य सारल्यसम्पादनम्।
2. सफलाध्यापनाय सहायताप्रदानम्।
3. शिक्षणं प्रभावपूर्णं सफलीकर्तुञ्च।
4. छात्राणां ध्यानमाकर्षणार्थम्।
5. छात्राणाम् अभिरुचिसम्पादनम्।
6. स्वल्पसमये विस्तृतविषयस्य ज्ञानप्रदानम्।
7. क्रमबद्धयोजनाधारेण पाठनम्।
8. प्रकृतविषयस्य विविधविषयैस्सह समायोजनम्।
9. बालानामभिरुचिवर्धनम्।

## सन्दर्भग्रन्थसूची

1. मित्तल सन्तोष- संस्कृत शिक्षण, 2000
2. सफाया रघुनाथ- संस्कृत शिक्षण, 1990
3. शुक्ला रजनीकान्त- व्याकरण शिक्षणम्

✦✦✦

# गद्यशिक्षणविधयः

**डॉ. हरिओम**

सहायकाचार्यः, शिक्षाशास्त्रविभागः

श्रीरणवीरपरिसरः, जम्मूः

गद्यशब्दस्य व्युत्पतिः 'गद् व्यक्तायां वाचि' इति धातोः 'गदमदचरयमश्चानुपसर्गे' इति सूत्रेण यत् प्रत्यये सति गद्यमिति शब्दः निष्पन्नो भवति, यस्यार्थः भवति स्पष्टं कथनम् इति, पादशून्या पदसंरचना एव गद्यमिति। दण्डिना स्वकीये काव्यादर्शे उक्तम्-अपादः पदसन्तानो गद्यमिति। क्रमेऽस्मिन् आचार्यविश्वनाथेनापि साहित्यदर्पणे गद्यविषये उक्तम्- वृत्तबन्धोज्झितं गद्यमिति। अस्मिन्नेव क्रमे प्रो. योगेश्वरदत्तशर्मणा सम्पादिते साहित्यदर्पणे गद्यस्य लक्षणविषये इत्थं प्रोक्तं- 'वृत्तबन्धोज्झितं छन्दोगतह्रस्वदीर्घादिनियमरहितं वाक्यं गद्यसामान्यलक्षणम्'। आङ्ग्लभाषायां गद्यं Prose इत्यनेन शब्देन ज्ञायते, यस्यार्थः भवति- स्पष्टसरलानलंकृतभाषायां कथनमिति। अत्र विभिन्नग्रन्थैः लेखकैः च गद्यस्यार्थं ज्ञात्वा अग्रे गद्यशिक्षणस्य काश्चिद् विशेषताः प्रस्तूयन्ते–

**गद्यशिक्षणस्य विशेषताः–**

1. संस्कृतगद्यमपि पद्यमिव समानाभिव्यक्तये सम्मानजनकं सन्तोषजनकञ्च स्थानं प्राप्तमस्ति।

2. संस्कृतगद्येन नैकप्रकारस्य विचाराणां, मृदुलतमभावानां, दार्शनिकतत्त्वानां, वैज्ञानिकतथ्यानाम्, उपदेशात्मकशिक्षाप्रदमूल्यानामभिव्यक्तिः च क्रियते।

3. संस्कृतगद्येपि पद्यमिव रसास्वादनं लेखकैः पाठकैः च क्रियते।

4. संस्कृतभाषायां गद्याध्ययनस्य विभिन्नानि महत्त्वानि जायन्ते। गद्येन एव छात्राणां संस्कृतभाषायाः एवञ्च तस्याः स्वरूपस्य ज्ञानं जायते।

**विशेषतानां वर्णनमत्र विधाय अग्रे गद्यशिक्षणस्य उद्देश्यानां वर्णनं क्रियते।**

**गद्यशिक्षणस्योद्देश्यानि–**

अत्र मुख्यरूपेण गद्यशिक्षणस्योद्देश्यानि द्वयोः भागयोः विभक्तुं शक्यन्ते। ते

च–

सामान्योद्देश्यानि विशिष्टोद्देश्यानि च। आदौ सामान्योद्देश्यानां तदनु विशिष्टोद्देश्यानां वर्णनं भविष्यतीति।

## 1. सामान्योद्देश्यानि–

1.1 गद्यशिक्षणेन छात्राणां शब्दभण्डारे वृद्धिकरणम्।

1.2 छात्राणामुच्चारणशुद्ध्यर्थं सहायताप्रदानम्।

1.3 छात्राणां पठितवाक्यानाम् अनुच्छेदानाञ्च अर्थावबोधने सहायताप्रदानम्।

1.4 छात्रेषु गद्याध्ययनं प्रति रुच्युत्पादनम्।

1.5 छात्राणां कल्पनाशक्तेः विकासकरणम्।

## 2. विशिष्टोद्देश्यानि–

विशिष्टोद्देश्यानि पञ्चधा विभक्तुं शक्यते। यथा- भाषातत्त्वानां ज्ञानं, विषयवस्तुनः ज्ञानम्, विभिन्नविधानां ज्ञानप्रदानम्, अर्थग्रहणात्मकोद्देश्यम्, अभिव्यक्त्यात्मकोद्देश्यञ्चेति।

**2.1 भाषातत्त्वानां ज्ञानम्**–शब्दभण्डारः, सन्धिः, समासः, प्रकृतिप्रत्ययः, उपसर्गः, वाक्यरचनादिविषये ज्ञानप्रदानम्।

**2.2 विषयवस्तुनः ज्ञानम्**–पाठ्यविषयस्य महत्त्वं, सांस्कृतिक-पौराणिक-व्यावहारिक-वैज्ञानिकानुभूतीनां ज्ञानप्रदानम्।

**2.3 विभिन्नविधानां ज्ञानप्रदानम्**–संस्कृतगद्यस्य विभिन्नविधानां विषये छात्रेभ्यः ज्ञानप्रदानम्। यथा-कथा, आख्यायिका, एकांकी, आत्मकथा, जीवनी, वार्तालापः चेत्यादयः।

**2.4 अर्थग्रहणात्मकोद्देश्यम्**–अस्मिन् उद्देश्ये भावग्रहणस्य श्रवणं पठनं चेत्यनयोः द्वयोः कौशलयोः अर्थग्रहणस्य योग्यतोत्पादनम्।

**2.5 अभिव्यक्त्यात्मकोद्देश्यम्**–छात्राणां लिखिताभिव्यक्तेः मौखिकाभिव्यक्तेः च विकासकरणम्। कक्षाकक्षे प्रश्नोत्तरमाध्यमेन लिखिताभिव्यक्तेः मौखिकाभिव्यक्तेः च मूल्याङ्कनं कर्तुं शक्यते।

## स्तरानुसारं गद्यशिक्षणस्योद्देश्यानि–

यदि वयं स्तरानुसारं गद्यशिक्षणस्योद्देश्यानि निर्धारयामः तर्हि स्तरत्रयमेव दृष्टिपथि आगच्छति। यथा-प्राथमिकस्तरः, माध्यमिकस्तरः, उच्चस्तरश्चेत्यादयः। क्रमेण एतेषां वर्णनमग्रे शोधपत्रेऽस्मिन् जायते।

**1. प्राथमिकस्तरः–**

1.1 सरलसंस्कृतशब्दानां शुद्धोच्चारणकरणम्।

1.2 शब्दभण्डारे वृद्धिकरणं, नवीनशब्दैः सह च परिचयकरणम्।

1.3 छात्राणां सरलसंस्कृतभाषायां मातृभाषायाञ्च पाठगतविचारणां मौखिक-लिखितरूपयोः प्रकाशनम्।

1.4 छात्रेषु संस्कृतभाषां प्रत्यनुरागोत्पादनम्।

**2. माध्यमिकस्तरः–**

2.1 छात्रेभ्यः भाषातत्त्वानां ज्ञानप्रदानम्। यथा- सन्धिः, समासः, प्रत्ययः, उपसर्गश्चेति।

2.2 पाठगतविषयवस्तुनः स्पष्टीकरणम्।

2.3 छात्रेभ्यः गद्यशिक्षणस्य विभिन्नविधानां परिचयप्रदानम्। यथा- कथा, एकांकी, पत्रमित्यादयः।

2.4 छात्रेषु संस्कृतभाषायाः साहित्यानां पठने रुच्युत्पादनम्।

**3. उच्चस्तरः–**

3.1 छात्रेभ्यः भाषातत्त्वानां विशदज्ञानप्रदानम्। यथा–प्रकृतिः, प्रत्ययः शब्दव्युत्पतिः, रूपसिद्धिश्च।

3.2 छात्राणां शब्दभण्डारस्य सक्रियकरणम्। यथा–वाक्यप्रयोगकरणं, पर्याय-शब्दानां विलोमशब्दानां निर्माणञ्चेति।

3.3 छात्राणां संस्कृतसाहित्यस्य गहनाध्ययनं प्रति प्रेषणम्।

3.4 छात्रेषु सृजनात्मकशक्तेः विकासकरणम्।

गद्यस्य शिक्षणे विशेषतानाम् उद्देयानाञ्चात्र प्रतिपादनं विधाय गद्यशिक्षणस्य विधीनां प्रतिपादनं क्रियते। गद्यशिक्षणे एतादृशाः विधयः भवन्ति येषां माध्यमेन छात्राः सरलतया झटत्येव विषयमवगच्छन्ति। एतादृशाः विधयः शिक्षणे, पाठ्यक्रमे, शिक्षकछात्राभ्यां महद् योगदानं यच्छन्ति। क्रमेणात्र प्रमुखगद्यविधीनां वर्णनं क्रियते।

**प्रत्यक्षविधिः–**

शिक्षकः शब्दानामर्थबोधनाय साक्षात् वस्तूनि, चित्राणि, प्रतिकृतिर्वा (Model) प्रदर्शयति। छात्राः अर्थं वदन्ति। इत्थं शिक्षकः अभिनयेन सङ्केतद्वारा वा शब्दार्थं ज्ञापयति। ततः अध्यापकः अर्थं वक्तुं छात्रान् प्रेरयति।

**प्रयोगविधिः–**

केषाञ्चित् शब्दानामर्थं वाक्यप्रयोगेण बोधयितुं शक्यते। शिक्षकः तं शब्दं प्रयुज्य द्वित्राणि वाक्यानि वदेत्। ततः परं तस्य शब्दस्यार्थः प्रष्टव्यः। यथा–आपणे विविधानि वस्तूनि विक्रियन्ते।

**अभिनयविधिः-**

अस्मिन् विधौ कक्षायामध्यापकः छात्राणां पुरस्तात् आगतानां कठिनशब्दानाम् अभिनयं करोति। अनेन छात्राः जानन्ति यत् अस्य शब्दस्य अयमर्थः जायते। यथा–खादति, पिबति, गच्छति, आनयति इत्यादिक्रियापदानि। इत्थम् अभिनयेन सरलतया स्पष्टीकर्तुं शक्यते।

**व्याख्याविधिः–**

भारतीयविद्यालयेषु व्याख्याविधेः प्रचलनमधिकं वर्तते। अस्मिन् विधौ अध्यापकाः शैक्षिकोपकरणानाम् अभावे अथवा विभिन्नैः अन्यैः प्रविधिभिः सह व्याख्याविधेः उपयोगं कर्तुं शक्नुवन्ति। व्याख्यायाः अन्तर्गते परिभाषा अपि आगच्छति।

**प्रसङ्गविधिः–**

केषाञ्चित् शब्दानां व्याख्यानाय ऐतिहासिकः, भौगोलिकः, पौराणिको वा प्रसङ्गः वर्णनीयो भवति। एतेन सांस्कृतिकमुद्देश्यं सिद्ध्यति। यथा–विषयेन सह सम्बन्धितप्रसङ्गं श्रावयित्वा बोधनं क्रियते।

**सारांशकथनविधिः–**

शिक्षकः गद्यस्य विस्तृतव्याख्यानं कृत्वा तस्य सारांशं संक्षेपरूपेण प्रस्तौति। छात्रानपि संस्कृतेन मातृभाषया वा सारांशं कथयितुं प्रेरयति। तेन च पाठ्यविषयः स्पष्टः भवति।

**अनुवाचनविधिः–**

शिक्षकः अनुवाचनं कृत्वा गद्यांशं पठितुं छात्रान् प्रेरयति। कठिनवर्णानां, संयुक्ताक्षराणां, सन्धियुक्तानां शब्दानां, समासानाञ्च उच्चारणे विशेषाभ्यासः आवश्यकः। शिक्षकः छात्राणां दोषान् संशोधयेत्। एवञ्च छात्राः गद्यांशानां सुष्ठुः वाचने कुशलाः भवेयुः। इत्थं छात्राणां वाचनकौशलं सिद्ध्यति।

**अनुवादविधिः–**

अध्यापकः कक्षायां पाठनकाले पाठे आगतानां कठिनशब्दानां वाक्यानाञ्चार्थं मातृभाषया बोधयति श्यामफलके च विलिख्य प्रदर्शयति।

अत्र शोधपत्रेऽस्मिन् प्रमुखविधीनां वर्णनं कृतमस्ति। गद्यं छात्रान् सरलतया पाठयितुम् इतोऽपि बहवः विधयः भवन्ति, येषां प्रयोगः एक उत्तमः शिक्षकः स्वीये पाठने विभिन्नरूपेण करोति। गद्यपाठने पद्यमिव रुच्युत्पादनाय एतेषां प्रयोगः परमावश्यकः इति। एतेषां प्रयोगः पाठ्यक्रममिव छात्राणां स्तरानुगुणम् एकः शिक्षकः कुर्यात्।

**सन्दर्भग्रन्थः–**

1. सफाया, रघुनाथ, 2011, संस्कृतशिक्षण, तृतीय संस्करण, हरियाणा साहित्य अकादमी, पंचकूला, हरियाणा।
2. सिंह, सत्यव्रत, 2012, साहित्य दर्पण, चौखम्बा विद्याभवन, वाराणसी।
3. पराशर, योगेश्वरदत्त, 2000, साहित्यदर्पणम्, प्रथम संस्करण, नाग प्रकाशक, दिल्ली।
4. मित्तल, सन्तोष, 2013, संस्कृतशिक्षणम्, द्वितीय संस्करण, नवचेतना पब्लिकेशन्स, जयपुर।

# वैद्युतीयसंसाधनानि पाठ्यसहगामिक्रियाः च

-डॉ. प्रमोदशुक्लः

सहायकाचार्यः, श्रीरणवीरपरिसरः, जम्मूः

पाठ्यक्रमस्य विषयाणां शिक्षणेन छात्राणां ज्ञानात्मकपक्षस्य विकासः भवति। परन्तु भावात्मकपक्षाणां क्रियात्मकपक्षाणां च विकासः न भवति। अतः तयोः पक्षयोः विकासाय वै-संसाधनानि पाठ्यसहगामिक्रियाः च आयोज्यन्ते। संस्कृतशिक्षणे अपि एतासु क्रियासु अधिकावधानम् अनिवार्यम् अस्ति।

## वैद्युतीय-संसाधनानि

साम्प्रतिके युगे तु छात्रस्य पुरतः पाठ्येतरक्रियाणां विपुलराशिः अस्ति। परिस्थितिः एतादृशी अस्ति यत् छात्रः पाठ्यक्रमं पठितुं न इच्छति। पुस्तकपठने, गृहकार्यसम्पादने कक्षायाम् उपवेशने च तस्य रुचिः न भवति। तस्य कारणं प्रौद्योगिकी अस्ति। गेहेषु आपणेषु च भूरिशः प्राविधिकानि वस्तूनि बालकम् आकर्षयन्ति। तानि च वस्तूनि निम्नलिखितानि सन्ति-

1. पाटिम-चलवाणी
2. दूरदर्शनम्
3. सङ्गणकम्
4. वै-क्रीडाः

विशिष्य एतानि चत्वारि वस्तूनि बालकेभ्यः अतीव प्रियाणि सन्ति। कस्मिंश्चित् काले बाले कथाभिः संस्काराः आरोप्यन्ते स्म। मातापितरौ, पितामही-पितामहौ अन्ये गृहजनाः वा बालं कथागीतादिकं श्रावयित्वा तस्य मनोरञ्जनं कुर्वन्ति स्म। तत्र तेषाम् उद्देश्यं तथा न भवति स्म यद् अनया कथया बालस्य तर्क-निर्णय-उच्चारण-भाषा-व्यवहारकुशलतादीनां परिष्कारः विकासश्च भविष्यति। तद् अनायासेन एव जायते स्म। कदाचित् शिक्षाप्रदानम् इति कथाश्रावणस्य किमपि उद्देश्यं भवतु नाम।

प्रवर्तमाने सङ्क्रमिते काले बालानां जीवनचर्यां पश्यामः चेद् गृहपूर्वजानां बालान् प्रति उदासीनता विवशता च दृश्यते। कारणं तत्र इदम् अस्ति यद् यदा पाटिम-चलवाणी, दूरदर्शनम्, वै-क्रीडा सङ्गणकं च इत्यादीनि संसाधनानि मनोरञ्जनाय

न आसन् तदा गृहपूर्वजानां मुखैः कथा-गीत-प्रहसनादीनि एव मनोरञ्जनस्य संसाधनानि आसन्, तदा लोकसंसाधनैः बालानां विकासः अभिवृद्धिश्च भवति स्म।

वर्तमाने युगे तु नाटकस्य स्थानं चलचित्रेण निराक्रियते, गृहजनानां कथाभ्यः दूरदर्शनस्य हास्यचित्र-माध्यमाः अधिका रुचिकराः रञ्जकाः च सन्ति। सङ्गणकस्य विविधाः चलचित्रक्रीडाः पारम्परिकक्रीडानां स्थाने प्रभाविन्यः सन्ति। सम्प्रति निर्धनानां गृहेषु मशकाः दंशन्तु नाम, रोगाः भवन्तु नाम, पौष्टिकः आहारः मास्तु, स्वास्थ्यं मास्तु परन्तु दूरदर्शनम् आवश्यकं पाटिम-चलवाणी तु आवश्यकी एव।

श्रवणम्, भाषणम्, पठनं लेखनं चेति चतुर्णां संस्कृतभाषाकौशलानां विकासाय वैद्युतीय-संसाधनानां नियन्त्रितोपयोगेन पाठ्यसहगामि-क्रियाभिः च एव बालानां सर्वाङ्गीणविकासः भवितुं शक्नोति। शिक्षणे एतेषां उपयोगः कथम् इति अधः क्रमेण विलिख्यते-

1. **पाटिम-चलवाणी-** अन्तर्जालयुता विविधानुप्रयोगैः च संवलिता एषा चलवाणी भवति। अतः रुचिकरं किमपि द्रष्टुं श्रोतुं वा एषा न सञ्चालनीया। आवश्यकतायां सत्याम् (अध्ययने, स्वस्थमनोरञ्जने, आवश्यककार्यसम्पादने च आदीषु) अस्याः उपयोगः स्यात्। तत्र फेसबुक्, ह्वाट्सेप, युट्युब, क्रीडा आदिषु च वृथा कालः न यापनीयः। तत्र एतद् ध्यातव्यं यद् एतेषु अनुप्रयोगेषु यद् आगच्छति तस्य अनुसारेण न वर्तितव्यं प्रत्युत स्वीयानुसारेण तत्र प्रवर्तितव्यम्। अर्थाद् या आवश्यकता अस्ति तस्याः एव विषये द्रष्टव्यम् प्रर्तितव्यं वा। तत्र यत् किमपि रुचिकरम् आयाति तस्मिन् कालः न यापनीयः।

चलवाण्यां केचन संस्कृतस्य अनुप्रयोगाः स्थापनीयाः। यथा- शब्दकोषः, धातु-शब्दरूपमाला, अमरकोषः च इत्यादि। संस्कृतस्य तथ्यानि अपि गूगल-अन्वेषणपुटकेन समाहर्तव्यानि। केचन चलवाण्याः अनुप्रयोगानाम् आभियान्त्रिकाः सम्पर्केषु समायान्ति चेत् ते संस्कृतस्य कृते विविधकार्यक्रमान् अनुप्रयोगान् च निर्मातुं प्रार्थनीयाः।

1. **दूरदर्शनम्-** दूरदर्शने आकाशवाण्यां च कदा कदा संस्कृतकार्यक्रमाः आगच्छन्ति इति ज्ञानं कृत्वा छात्रेभ्यः दर्शनीयं श्रावणीयं च। दूरदर्शनस्य आकाशवाण्याः च अधिकारिणः, विज्ञापनदातारः उद्योगिनः वा सम्पर्केषु समायान्ति चेत् ते संस्कृतेन विज्ञापनं कर्तुं प्रदातुं वा निवेदनीयाः। स्वयं च विविध-आवश्यकानां वस्तूनां प्रासङ्गिकतथ्यानां वा रुचिकरविज्ञापनानि सरलसंस्कृतेन लेखनीयानि।

2. **सङ्गणकम्-** संस्कृतं सङ्गणकस्य अतीव प्रियम् उपयुक्तं च अस्ति। यतोहि संस्कृतं मानकीकृतभाषा अस्ति। सङ्गणकम् अपि संस्कृतं प्राप्य अधिकं

शक्तिवत् मानकीकृतं च भविष्यति इति मत्वा वैज्ञानिका संस्कृतसङ्गणकयोः विषये कार्यं कुर्वाणाः सन्ति।

सङ्गणकसमर्थिताः नैके संस्कृतकार्यक्रमाः छात्रेभ्यः प्रस्तोतुं शक्यन्ते। सङ्गणकेन पाटिमफलकोपरि पीपीटी, शैक्षिकचलचित्रम्, लघुचलचित्रम्, वै-पुस्तकं चेत्यादीनां माध्यमैः संस्कृतशिक्षणं सरलं रुचिकरं प्रभावि च कर्तुं शक्यते।

**3. वै-क्रीडा**- अद्यत्वे चलवाण्यां सङ्गणके च वै-क्रीडाः बालकानां कृते अतीव रुचिकराः मनोरञ्जनपूरकाः च जायमानाः सन्ति। बहवः बालकाः तु वै-क्रीडाक़ारणैः आत्महननम् अपि कुर्वन्तः सन्ति। वै-क्रीडासु संस्कृतप्रकल्पाः स्थापयितुं शक्यन्ते।

**पाठ्यसहगामिक्रियाः**

**4. वादविवादस्य प्रतियोगिता**- कस्मिन्नपि विषये (संस्कृतपठनेन लाभः अथवा हानिः) पक्षे विपक्षे वा छात्राः स्वविचारान् प्रकटयन्ति। तेषां मौखिकाभिव्यक्तिः ससक्ता भवति श्रवणकौशलस्य च विकासः भवति। शब्दकोशेऽपि वृद्धिर्भवति। छात्राणां शारीरिकमानसिकस्तरानुसारेण वादविवादस्य विषयः चयनीयः। स्वविचारान् प्रकटयितुं छात्राः प्रेरणीयाः। एकः पक्षः अपरपक्षस्य मतं खण्डयति। कुशलनिर्णायकैः विषयवस्तुप्रतिपादनशैलीं भाषां च दृष्ट्वा मूल्याङ्कनं क्रियते।

**5. भाषणम्**- संस्कृतविदुषः विद्यालये आमन्त्र्य छात्राणां स्तरानुसारेण सरलसंस्कृतेन विविधविषयेषु व्याख्यानम् आयोजनीयम्। संस्कृतं श्रुत्वा छात्राणां श्रवणकौशलस्य अभ्यासः भविष्यति। ते स्वयमपि संस्कृतं भाषितुं प्रयत्नं करिष्यन्ति। ततः स्वविद्याद्यालये छात्राणां कृते संस्कृतसम्भाषणशिविरस्य आयोजनं कारणीयण्। छात्रेभ्यः भाषणविषयं पूर्वं निर्धाय अभ्यासस्य समयं दत्वा निश्चिते दिवसे भाषणस्य आयोजनं करणीयम्।

**6. श्लोकपाठः**- सस्वरश्लोकपाठस्य व्यवस्था करणीया। मन्त्र-श्लोक-गीतादीनि चित्वा प्राथमिकस्तरादेव छात्रेभ्यः पाठस्य अवसरः देयः। प्रार्थनासभायाम्, वार्षिकोत्सवे, बालसभादिषु अवसरेषु एताः क्रियाः व्यक्तिगतरूपेण सामूहिकरूपेण च कारणीयाः। कस्मिन्नपि कार्यक्रमे स्वागतगीतं मङ्गलाचरणं च संस्कृतेन कारणीयम्। अनेन विद्यालये संस्कृतमयवातावरणस्य निर्माणं भवति। संस्कृतं प्रति छात्राणां रुचिः जागर्ति।

**7. कथाकथनं कथालेखनं च** – शिक्षकः तु संस्कृतकथां श्रावयेद् एव सहैव भाषाभ्यासनिमित्तं शिक्षकेण बालकानां मुखात् कथाः वाचनीयाः। शिक्षकः कथाचित्राणां साहाय्येन लघुवाक्येषु हितोपदेश-पञ्चतन्त्रादीनां कथाः प्रस्तुयात्। शिक्षकः

श्रव्यदृश्योपकरणानाम् अपि प्रयोगं कर्तुं शक्नोति। उच्चस्तरस्य छात्राः कथालेखनाय अपि प्रेरणीयाः।

**8. निबन्धलेखनम्**- छात्राणां स्तरानुसारं निबन्धशीर्षकान् चित्वा निबन्धलेखनस्य प्रतियोगिता कारणीया। अनेन छात्रेषु स्वाध्यायप्रवृत्तिः, पठनपूर्वकम् अवगमनस्य योग्यता, लिखिताभिव्यक्तेः क्षमतायाः विकासः च भवति। छात्राणां शब्दकोषे वृद्धिः भवति।

9. दैनन्दिनव्यवहारस्य वस्तूनां संस्कृतेन नामानि लिखित्वा चित्रं चापि कृत्वा प्रदर्शिनी करणीया। भारतीयवाङ्मयवैभवानां (वेद-पुराण-उपनिषद्-विविधधर्मग्रन्थानां ऋषीणां च) चित्रं कृत्वा प्रदर्शन्यां स्थापनीयम्।

**10. विद्यालयपत्रिका**- छात्राणां सर्जनक्षमतानां विकासं कर्तुं पत्रिकासु तैः लेखः लेखनीयः। तत्र पत्रिकायां संस्कृतखण्डे लेखाः, कथाः, गीतानि, अनुभवः, विनोद- कणिकाः, वार्ताः प्रहेलिकादयः लेखनीयाः।

11. छात्राणां हस्तलिखितं सुभाषितम्, गीतम्, कविता सूक्तिः वा भित्तिषु संस्थापनीया। विद्यालस्य विविधवस्तूनां वृक्षाणां पुष्पवृक्षाणां च नामानि लिखित्वा यत्र तत्र स्थापनीयम्।

**12. संस्कृतसाहित्यसम्बद्धक्रीडाः/भाषाक्रीडाः**- यथा- प्रश्नोत्तरी- अत्र छात्रेषु दलद्वयं कृत्वा नाम च दत्वा (बालिकानां कोकिलादलं बालकानां च मयूरदलम् इति) विजयभावनया क्रीडाः क्रीडनीयाः। तत्र प्रश्नाः भारतीयसंस्कृतग्रन्थैः, इतिहासपुराणाभ्यां वा भवितुम् अर्हन्ति। अन्त्याक्षरी- श्लोकानाम्, संस्कृतगीतानाम्, शब्दानां पदानां वा भवति। तथा च यथा- म इति अक्षराधारेण संस्कृतस्य पञ्चपदानि वाक्यानि वा वदतु इति शब्दक्रीडा। सुभाषितानां प्रतियोगिता, प्रहेलिका, विनोदकणिकाः, पठनस्पर्धा सांस्कृतिकगतिविधियः च इति कार्यक्रमाः करणीयाः। संस्कृतदिवसस्य आयोजनम्, संस्कृतनाटकम्, एकांकी संस्कृतगीतानां प्रस्तुतिः च कारणीया।

**13. यज्ञयागादीनां निर्वहणम्**- यज्ञानां का उपयोगिता, यज्ञयागादीनां प्रक्रिया कथं चलति, कदा, किमर्थम् एषा प्रक्रिया अनुपालनीया। इति व्यावहारिकरूपेण ज्ञानप्रदानम्।

14. आकाशवाणी, दूरदर्शनम्, ध्वनिमुद्रकः सङ्गणकं चेत्यादीनाम् उपयोगः करणीयः। प्राचार्येण सह मधुरसम्बन्धं संस्थाप्य संस्कृतस्य विविधकार्याणि साधनीयानि। यथा- प्रातः सायं च संस्कृतस्य कक्षाः प्रचलेयुः। संस्कृतस्य कार्यक्रमाः अथवा संस्कृतगतिविधयः निर्विघ्नतया निरन्तरं च भवेयुः।

**सन्दर्भाः**

1. मित्तलसंतोषः (2013), संस्कृतशिक्षणम्, नवचेतना पब्लिकेशंस, जयपुरम्।
2. कुलश्रेष्ठः एस.पी. (1982), शैक्षिक तकनीकी के मूल आधार, विनोद पुस्तक मन्दिर, आगरा।
3. https://beenabisht.wordpress.com

# संस्कृतशिक्षणे गुणात्मकं संशोधनं कथम्?

-डॉ. मुकेशशर्मा

सहायकाचार्यः, शिक्षाशास्त्रविभागः

श्रीरणवीरपरिसरः, कोट-भलवालः, जम्मूः

वर्तमाने प्रौद्योगिकीयुगे समयलाभार्थं तथा च कार्यसरलताहेतोः नित्यनूतनाविष्काराणाम् अन्वेषणानां नियमानाञ्च प्रतिपादनं भवति, येषां प्रभावः शिक्षाजगति अपि द्रष्टुं शक्यते। शिक्षाजगति शिक्षणप्रक्रियायाः रुचिकरसम्पादनाय बोधगम्यतानिर्माणाय च शोधकर्तृभिः शिक्षाविद्भिश्च नूतननियमानां तथा च शिक्षणविधीनां प्रतिपादनं क्रियते। येषां शिक्षणप्रक्रियाणां वर्णनं शिक्षाशास्त्रे प्राप्यते तेषां प्रयोगं शिक्षकः विषयवस्त्वनुगुणं यदा करोति तदा अवश्यमेव पाठ्यवस्तु रुचिकरं बोधगम्यञ्च भविष्यति। संस्कृतशिक्षणेऽपि विषयवस्त्वनुगुणं शिक्षणविधेः प्रविधेश्च प्रयोगः करणीयः। तदैव संस्कृतशिक्षणे गुणात्मकवृद्धिः दृश्येत। संस्कृतशिक्षणे केवलं शिक्षणविधेः प्रयोगः एव न पर्याप्तः अपितु वर्तमानकालानुरूपम् आधुनिकशिक्षणविधिभिः सह आधुनिकशिक्षणपद्धतीनां प्रयोगः अपि अपेक्ष्यते।

**संस्कृतशिक्षणे पाटिमकक्ष्याकक्षस्य (स्मार्टकक्ष्याकक्षः) प्रयोगः-**

वर्तमानशिक्षणपद्धतिं वयम् आधुनिकशिक्षणपद्धतिमपि वक्तुं शक्नुमः। येन माध्यमेन वर्तमानकाले विज्ञान-अंग्रेजी-गणितादिविषयाणां शिक्षणम् आधुनिकशिक्षणपद्धत्यनुसारं भवति (यथा-पाटिमकक्षा द्वारा)। परन्तु तदनुरूपं संस्कृतविषयस्य शिक्षणं न भवति। वर्तमानकाले द्रष्टुं शक्यते यत् प्रायशः सर्वेषां विषयाणाम् पाटिमकक्ष्याकक्षानुरूपं विकासः भवति। परन्तु अस्मिन् क्षेत्रे संस्कृतविषयस्य उपेक्षा अभवत्। येन कारणेन संस्कृतशिक्षणे समयानुसारं गुणात्मकवृद्धिः न अभवत्। संस्कृतविषये गुणात्मकसंशोधनाय पाटिमकक्ष्याकक्षस्य निरूपणम् आवश्यकमस्ति। "संस्कृतसंवर्धनप्रतिष्ठानं नवदेहली" इति संस्थाद्वारा षष्ठीकक्षातः दशमीकक्षापर्यन्तं पाठ्यपाठानाम् पाटिमकक्षाकक्षे प्रयोगाय निर्माणं अभवत्। तथापि इदं कार्यं न पर्याप्तम्। भविष्ये संस्कृतविषयाणां पठनपाठने पाटिमकक्षाकक्षे एव भवेताम् येन अल्पसमये छात्राणां व्यवहारेषु अधिगमदृष्ट्या परिवर्तनं कर्तुं शक्यते। अतः सम्पूर्णसंस्कृतशिक्षणसंस्थानेषु पाटिमकक्ष्याकक्षाणां व्यवस्था सज्जीकरणञ्च भवेत्।

## संस्कृतशिक्षणे शिक्षणविधीनां प्रयोगः

संस्कृतशिक्षणक्षेत्रेषु शोधकार्यं पर्याप्तमात्रायाम् अभवत्। परन्तु तेषां शोधकार्याणां प्रयोगः संस्कृतशिक्षणक्षेत्रेषु न अभवत्। संस्कृतशिक्षकैः संस्कृतविषयवस्त्वनुरूपमेव शिक्षणविधेः प्रयोगः करणीयः। परन्तु अत्र सर्वप्रथमं प्रश्नः उदेति यत् शिक्षणविधिः कः? शिक्षणविधिः नाम येन विधिना शिक्षकः शिक्षार्थिभ्यः ज्ञानं प्रददाति शिक्षणं करोति च। शिक्षणविधिः शिक्षणस्य उद्देश्यानां प्राप्तये साधनमेकमस्ति। शिक्षणविधिरिति पदस्य प्रयोगः व्यापकार्थे भवति। एकस्मिन् पक्षे अस्यान्तर्गते अनेकाः प्रणाल्यः योजनाश्च सम्मिलिताः द्वितीयपक्षे शिक्षणस्य प्रक्रिया अपि सम्मिलिताः। शिक्षकाणां विभिन्नशिक्षणविधीनां ज्ञानम् अपेक्ष्ते यैः शिक्षकः स्वयोग्यता-अनुभव-रुच्यानुसारञ्च उपयुक्तविधीनां प्रयोगं कृत्वा कक्षायां शिक्षणं कर्तुं शक्नोति।

विभिन्नशिक्षणविधीनां प्रयोगेण संस्कृताध्यापनं प्रभावशालि रोचकञ्च कर्त्तुं शक्यते। निम्नलिखितकारणैः विभिन्नशिक्षणविधीनां महत्त्वं वर्तते।

1. पाठ्यविषयस्य रोचकत्वाकर्षकत्वयोः सम्पादनम्।
2. पाठ्यवस्तुनः सार्थकतायाः सुग्राह्यत्वस्य च सम्पादनम्।
3. प्राप्तज्ञानस्य परिपुष्टीकरणम्।
4. अधीतस्य स्थैर्यकल्पनम्।
5. अनुभवसीम्नः विस्तारः।
6. छात्राणां भाषाध्ययने सक्रियताप्रवर्धनम्।
7. शिक्षणस्य प्रभावजनकताविवर्धनम्।

उपर्युक्तकारणैः शिक्षणविधीनां महत्त्वं स्पष्टं भवति। एवञ्च प्रभावपूर्णशिक्षणाय, अल्पसमयाभ्यन्तरे विस्तृतज्ञानाय, छात्राणां ध्यानाकर्षणार्थं सक्रियवातावरणनिर्माणाय जटिलानामपि शैक्षिकसमस्यानां सरलीकरणाय, पाठ्यविषयं प्रति छात्राणां रुचिविवर्धनाय च विधिरेव सर्वप्रमुखस्थानम् अधिरोहति इति ज्ञायते। अतः विधयः यावन्तः प्रमाणिताः भविष्यन्ति, छात्राणामपि तावत्यः विषयाधिगमक्षमताः भविष्यन्ति।

### शिक्षणविधयः -

प्राचीनकालादेव विभिन्नविषयाणां शिक्षणार्थं विभिन्नशिक्षणविधीनां प्रयोगः प्राप्यते। कालचक्रक्रमेण विषयानुगुणं शिक्षणविधीनामाविष्कारः क्रियते प्रयोगश्च दरीदृश्यते। यः अद्यापि गतिमान् गतिशीलश्च दृश्यते। वर्तमानसमये पश्यामः चेत् शिक्षकाः विषयवस्त्वनुगुणं शिक्षणविधीनां प्रयोगं कुर्वन्ति येन छात्राणां ज्ञाने स्थायित्वमागच्छति। अनेन रुचेरपि विकासः भवति। संस्कृतसाहित्यग्रन्थेष्वपि बहवः

विधयः दृश्यन्ते। तेषु केचन प्राचीनाः केचन अर्वाचीनाश्च सन्ति। तेषु केचन अत्र प्रस्तूयन्ते–

**क. प्राचीनशिक्षणविधयः**

वैदिककाले वेदाभ्यासे अध्ययनम्, चिन्तनम्, अभ्यासः, जपः, अध्यापनञ्च इति पञ्चप्रक्रियाणां समावेशो भवति स्म। एवं प्रकारेण वेदाभ्यासेनैव तत्समयस्य शिक्षणविधेः बोधो भवति स्म। तदैव व्याकरणाभ्यासे, ज्यौतिषज्ञाने, दर्शनावबोधे, काव्यशास्त्रज्ञाने अन्यान्यशास्त्राणां ज्ञाने अपि शिक्षणविधीनां प्रयोगः भवति स्म। प्राचीनकाले तथा च पाश्चात्यशिक्षणपद्धत्याः आगमनात्पूर्वं ये विधयः प्रयुज्यन्ते स्म, ते सर्वे प्राचीनविधयः भवन्ति। ऋषिमहर्षीणां परम्परयाऽऽगतत्वात् पारम्परिकविधिः प्राचीनविधिः वा कथ्यते। संस्कृतशिक्षणे प्रयुज्यमानाः प्राचीनशिक्षणविधयः यथा –

1. व्याख्याविधिः।
2. पारायणविधिः।
3. कण्ठस्थीकरणविधिः।
4. सूत्रविधिः।
5. प्रश्नोत्तरविधिः।
6. शास्त्रार्थविधिः।
7. कथाकथनविधिः।
8. वादविवादविधिः।
9. पाठशालाविधिः।
10. सम्भाषणविधिः।
11. व्याकरणविधिः।
12. चर्चाविधिः।
13. मौखिकविधिः।
14. कक्ष्यानायकविधिः।
15. पर्यटनविधिः चेत्यादयः।

**ख. नूतनशिक्षणविधयः –**

शिक्षणे परिवर्त्तनमानेतुं छात्राणां योग्यतानुगुणं पाठयितुं, कक्षाशिक्षणं प्रभावपूर्णञ्च कारयितुं शिक्षाविदः सर्वदा प्रयत्नशीलाः भवन्ति। मनोवैज्ञानिकशिक्षणसिद्धान्तानामनु-सरणपूर्वकं ये विधयः परवर्त्तिकाले व्यवहृताः, ते नूतनविधयः अर्वाचीनविधयः वा कथ्यन्ते। शिक्षणे प्रयुज्यमानाः नूतनविधयः यथा –

1. ह्यूरिस्टिकविधिः।
2. प्रत्यक्षविधिः।
3. प्रायोजनाविधिः।
4. समस्याविधिः।
5. आगमननिगमनविधिः।
6. विश्लेषणसंश्लेषणविधिः।
7. प्रयोगशालाविधिः।
8. सुकरातविधिः।
9. निरीक्षणविधिः।
10. क्रीडाविधिः।

11. किंडरगार्डनविधि:। 12. डेक्रॉलीविधि:।

13. मान्टेसरीविधि: चेत्यादय:।

शिक्षाशास्त्रे वर्णितानां प्राचीनार्वाचीनशिक्षणविधीनां प्रयोग: यदि शिक्षक: आदर्शरूपेण सम्यक्तया च संस्कृशिक्षणे करोति तर्हि अवश्यमेव संस्कृतपठने छात्रा: रुचिमन्त: तथा उत्सुका: भविष्यन्ति। अत: उपर्युक्तवर्णितविधीनां प्रयोग: शिक्षक: विषयवस्त्वानुगुणं करोति येत् संस्कृतशिक्षणे गुणात्मकं संशोधनं भविष्यत्येव।

## संस्कृतशिक्षणस्य माध्यमः संस्कृतम्

वर्तमानपरिस्थित्यां विद्यालयेषु संस्कृतविषयं संस्कृतमाध्यमेन न पाठयितुं समर्था: शिक्षका:। इयं महती समस्या संस्कृतशिक्षकाणाम्। संस्कृतशिक्षका: यदि पाठ्यविषयवस्तु संस्कृतमाध्यमेन पाठयिष्यन्ति तदा छात्रा: अपि संस्कृतभाषाणां अधिगमं कर्तुं सरलतया समर्था: भविष्यन्ति। सम्प्रति संस्कृतशिक्षक: संस्कृतस्य मातृभाषायाम् अनुवादं कृत्वा पाठयति। परन्तु संस्कृतशिक्षणे अयं विधि: सम्यक् न वर्तते। यथा- आङ्ग्लभाषाया: पाठनाय आङ्ग्लभाषाया: प्रयोग: भवति तथैव संस्कृतपाठनाय संस्कृतभाषाया: प्रयोग: करणीय:। यदि शास्त्राणां रक्षा: करणीया: तर्हि शिक्षणम् अपि संस्कृतमाध्यमेन भवेत्। अत: वक्तुं शक्यते यदि संस्कृतशिक्षणकाले संस्कृतवातावरणं भविष्यति तर्हि छात्रा: निश्चयेन संस्कृतभाषाया: श्रणवे भाषणे पठने लेखने पाठने च समर्था: भविष्यन्ति।

## संस्कृतशिक्षणे नवाचारस्य प्रयोगः

"प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तते" अर्थात् विना प्रयोजनेन मूर्ख: अथवा मन्दबुद्धिरपि किमऽपि कार्यं न कर्तुमिच्छति चेत् कक्षायां सामान्यबालका: कथं पठने सिद्धा: भविष्यन्ति? अत: संस्कृतशिक्षणे नवाचारस्यावश्यकता भवत्येव। नवाचारदृष्ट्या अध्यापक: पाठ्यवस्तुन: प्रतिमानस्वरूपं सज्जीकृत्य कक्ष्याकक्षे प्रयोगं कुर्यात्। तदैव अध्यापक: यदा कदा विषयवस्त्वनुगुणं कथामाध्यमेन गीतमाध्यमेन अभिनयमाध्यमेन नाटकमञ्चनमाध्यमेन च नवाचारं कर्तुं शक्यति। सम्प्रति तु अध्यापकेन शिक्षणे प्रौद्योगिकीमाध्यमेन अपि नवाचाराणां प्रयोग: क्रियते। संस्कृताध्ययनाध्यापनयो: च अपि प्रौद्योगिक्या: प्रयोगं यदि संस्कृतशिक्षक: करिष्यति तदा अवश्यमेव संस्कृतशिक्षणे नवाचार: भविष्यति।

प्राथमिकस्तरे संस्कृतशिक्षकेण शिक्षणाय पाठ्यवस्तुन: निर्माणं संगणकसाहाय्येन कर्तुं शक्यते येन प्राथमिकस्तरीयच्छात्रा: संस्कृतमपि आनन्देन पठितुं शक्नुवन्ति। प्राथमिक-माध्य-उच्चतरस्तरेषु शिक्षणदृष्ट्या अन्तर्जालेन "गुगलकक्ष्या" इत्यादीनां तन्त्रांशानां प्रयोगं कृत्वा संस्कृतशिक्षक: नवाचार: प्रस्तोतुं शक्नोति।

उपर्युक्तचिन्तनेन ज्ञायते यत् यदि संस्कृतशिक्षकः शिक्षणे गुणात्मकं संशोधन-मिच्छति तर्हि संस्कृतशिक्षकः पटुः (स्मार्ट) भविष्यति। पटुः अर्थात् शिक्षणदृष्ट्या शिक्षाक्षेत्रे यत्किमपि नूतनं भवति तस्मिन् विषये शिक्षकः जागरूकः तथा दक्षः भवेत्। वर्तमाने संस्कृतजगति एका प्रसिद्धा उक्तिः वर्तते- "संस्कृतं वद आधुनिको भव" परन्तु कथम्? संस्कृताध्यापकः संस्कृते तु सम्भाषणं करोति परञ्च आधुनिकविषयणाम् आधुनिकशैलीनाञ्च ज्ञानार्जनं न करोति, न इच्छति, तदा संस्कृतशिक्षणे नवचारः कथं भविष्यति? अतः संस्कृतशिक्षणाय शिक्षकाणां चिन्तनं व्यापकं भवेत्। संस्कृतसम्भाषणेन सह आधुनिकचिन्तनस्यावश्यकता अपि भवति। यदि शिक्षकः अत्रः सामञ्जस्यं स्थापयित्वा अध्यापयति तर्हि अवश्यमेव संस्कृतशिक्षणे गुणात्मकं संशोधनं भविष्यत्येवेति शम्।

**सन्दर्भग्रन्थाः-**


1. झा, डॉ. नागेन्द्र, ज्योतिष शिक्षण विधि, अभिषेक प्रकाशन दिल्ली, 2007।
2. देवनाथः रामानुज एवं उपाध्यायः भुवनेशः, व्याकरणशिक्षणविधयः, भारतीय विद्यासंस्थानम्, वाराणसी, 1992।
3. पाठक, पी.डी. एवं त्यागी, जी.एस.डी., सफल शिक्षण कला, विनोद पुस्तक मन्दिर आगरा, 1994।
4. भटनागर आर. पी., शिक्षा अनुसन्धान, इन्टरनेशनल पब्लिशिंग हाउस मेरठ।
5. भूषणा, सांवरमल, संस्कृतशिक्षणम्, स्वाति-पब्लिकेशन्स जयपुर।
6. मित्तलः सन्तोषः, संस्कृतशिक्षणम्-नवीनप्रविधयश्च, आदित्यप्रकाशनम्, जयपुर, 2008।
7. शर्मा आर. ए., शिक्षा अनुसन्धान, आर लाल बुक डिपो, नवीन संस्करण-2008।
8. त्रिपाठी शालिग्राम, शिक्षण कला, राधा पब्लिकेशन्स नई दिल्ली, 2005।
9. त्रिपाठी, डॉ. शालीग्रमाम, शिक्षण कला, राधा पब्लिकेशन्स नई दिल्ली, 1992।


✦✦✦

# शास्त्रशिक्षणे रसतत्त्वपर्यालोचनम्

-डॉ. विचित्ररञ्जनपण्डा

काव्यं हि आनन्दानुभूतिसाधनम् 'आनन्दानुभूतिश्च रसास्वादनमूला' रसास्वादनादेव आनन्दावाटितः। अतः काव्यप्रयोजने मम्मटः "सद्यः परनिर्वृत्तये" इति व्याचष्टे। "सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलित-वेद्यान्तरमानन्दम्"[1]। विश्वनाथः साहित्यदर्पणे रसस्वरूपं प्रतिपादयति यत् "रसो ब्रह्मास्वादसहोदरः"–

**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥[2]**

रसस्य आस्वाद्यत्वम् अनुभूतिविषयत्वं च मम्मटेन वर्ण्यते "पानकरसन्यायेन चर्व्यमाणः, हृदयमिव प्रविशन्, अन्यत् सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी शृङ्गारादिको रसः"[3]।

अयं रसशब्दः सर्वप्रथमं वेदेषु उल्लिखितः। यथा- "दधानः कलसे रसम्" यथा वा "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति"[4] इत्यत्र ब्रह्मणो रसरूपत्वं तदवाप्तौ च आनन्दोपलब्धिर्वर्ण्यते। काव्यपरम्परायां कविताकामिन्याः निखिलेभ्यः वाच्यर्थ-लक्ष्यार्थ-गुण-रीति-वक्रोक्ति-औचित्यादिभ्यः भिन्नः आत्मस्थानीयः रसः। अयमेव रसपारिजातः काव्यस्य शाखाप्रशाखारूपान् सर्वान् भेदप्रभेदान् उज्जीवयति, समाह्लादयति, रसयति च। अनेन विना काव्यं रसिकानां नीरसमनादृतं च भवति। यथोच्यते–

**साधुपाके विनास्वाद्यं भोजनं निर्लवणं यथा।**
**तथैव नीरसं काव्यं स्यान्नो रसिकतुष्टये॥**

अतः अलौकिकविलक्षणस्य अस्य रसस्य काव्यात्मत्वं सर्वैरङ्गीकृतम्। यथा- "न हि रसादृते कश्चिदर्थः प्रवर्तते" इति भरतमुनिः प्रतिपाद्य स्वीकरोति यत् रस

---

1. काव्य- 1.2
2. सा.दं. - 3.2.3
3. काव्य - 4
4. ..........।

एव हि परमोत्कृष्टतया आस्वाद्यते। "रसादयो हि द्वयोरपि तयोः जीवितभूताः" इति उद्घोषयन्–

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**

इत्यपि प्रकटयन् आनन्दवर्धनाचार्यः रसस्यैव काव्यात्मत्वं स्वीकरोति। 'रसेनैव सर्वं जीवति काव्यम्' इति अभिनवगुप्तेगुप्तेन, 'काव्यस्यात्मनि रसादिरूपे न कस्यचिद्विमतिः' इति महिमभट्टेन, 'ये रसस्याङ्गिनो धर्माः' इति मम्मटेन, 'वाक्यं रसात्मकं काव्यमिति' विश्वनाथेन च रसस्य काव्यात्मत्वम् अङ्गीकृतम्। अग्निपुराणेऽपि 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र हि जीवितम्' इत्यनेन रसस्य आत्मस्थानीयत्वेन स्वीक्रियते।

**रसस्वरूपम्–**

अथ कोऽयं रसः? किं वा तस्य स्वरूपम्? कथं वा तस्य निष्पत्तिः? इत्यादि- प्रश्नेषु समुजृम्भमाणेषु उच्यते भरतेन – "यथा हि नाना व्यञ्जनसंस्कृतमन्नं भुञ्जानः रसानास्वादयन्ति सुमनसः पुरुषाः हर्षादींश्चाधिगच्छन्ति तथा नाना भावाभिनयव्यञ्जितान् वागङ्गसत्वोपेतान् स्थायिभावान् आस्वादयन्ति सुमनसः प्रेक्षकाः हर्षादींश्चाधिगच्छन्ति। तस्मान्नाट्ये रसेति अभिख्याता"।[1]

यथा नानाव्यञ्जनमिश्रमन्नं भुञ्जाना रसान् आस्वादयन्ति, तथा नानाभावाभि-व्यञ्जितान् स्थायीभावान् सुहृदया आस्वादयन्ति, हर्षं चानुभवन्ति। रसभावयोः परस्परं पोषकत्वम्। न भावहीनो रसः न च रसहीनो भावः। एवं द्वावपि परस्परं भावयन्तः, रसः सर्वेषां भावानां मूलम्। यथा बीजं वृक्षपुष्पादेः। अत्र भोजनस्य कटुकषायतिक्तादिलौकिकरसवत् नाटकस्यापि रत्यादिस्थायिभावाः रसाः इत्युच्यन्ते इति भरतस्य वचनाद् ज्ञायते। भरतेन नाट्यशास्त्रे उच्यते – "न हि रसादृते कश्चिदर्थः प्रवर्तते"[2]। कथं रसनिष्पत्तिरिति जिज्ञासायां तेनोच्यते–

**'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः'।।**

अत्र विभावाः कारणानि, अनुभवाः कार्याणि, व्यभिचारिणश्च सहकारिणः, एषां संयोगात् रसस्य निष्पत्तिः। काव्यप्रकाशकर्ता मम्मटेन उक्तं यत्–

विभावानुभावव्यभिचारिभावैः यः व्यज्यते सः स्थायिभावरूपः रसः इत्युच्यते। तद्यथा- 'व्यक्तः सः तैर्विभावाद्यैः स्थायिभावः रसः स्मृतः' विश्वनाथेनापि उक्तम्–

---

1. नाट्य- अध्याय - 6
2. ..............................।

**विभावेनानुभावेन व्यक्तः संचारिणा तथा।**
**रसतामेति रत्यादिः स्थायिभावः रसः स्मृतः।।**

अर्थात् विभावानुभावव्यभिचारिभावानां संयोगात् व्यञ्जनाव्यापारेण अभिव्यञ्जितः सुहृदयानां हृदि विद्यमानः रत्यादिस्थायिभावः रस इत्युच्यते। अतः रसः ज्ञानकाले एव तिष्ठति, अज्ञानकाले न विद्यते। अतः अनित्यः रसः। अयं वेद्यान्तरस्पर्शशून्यः, ब्रह्मस्वादसहोदरात्मकः, चिन्मयस्वरूपः भवति। अयं च स्वाकारवदभिन्नत्वेन आस्वाद्यते। यथोच्यते विश्वनाथेन–

**सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मस्वादसहोदरः।।**

**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।।**

तैत्तरीयोपनिषदि उच्यते– "रसो वै सः, रसं ह्येवायं लब्धानन्दी भवति" इति अनेन ज्ञायते यत् यदा अयं जीवात्मा परमात्मनः साक्षात्कारं करोति तदा सः तस्मिन् परमात्मनि तल्लीनः भवति। अयमेव परमात्मा रसः इत्युच्यते। इमं रसं लब्ध्वा जीवात्मा परमानन्दं प्राप्नोति। इमं च रसं जीवात्मा अभिन्नत्वेन आस्वादयति। अस्य उदाहरणं जगन्नाथेन स्पष्टं प्रतिपादितम्। यथा– 'यथा शरावादिना पिहितः दीपः शरावादिनिवृत्तौ स्वयं प्रकाशते सन्निहितान् पदार्थान् अपि प्रकाशयति, तथा आत्मचैतन्यमपि रत्यादीन् भावान् प्रकाशयति'। रसस्य स्वरूपं प्रकाशयता मम्मटाचार्येण उक्तं यत् लोकव्यवहारे स्थायिनः रत्यादेः भावस्य यानि लक्षणादीनि तथा चन्दनचकोरादीनि कारणानि भवन्ति, तथा यानि निर्वेदाक्तीनि सहकारिणि भवन्ति तानि यदि काव्येषु नाटकेषु कविभिः वर्णितानि भवन्ति तर्हि ते यथाक्रमं विभावाः, अनुभावाः, व्यभिचारिभावाश्च कथ्यन्ते। एतैः विभावादिभिः अभिव्यक्तः रत्यादि-स्थायिभावः शृङ्गारादिः रस इति रस लक्षणम्। यथोच्यते–

**कारणान्यथ कार्याणि सहकारिणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।**

**विभावानुभावास्तत्कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायिभावः रसः स्मृतः।।**[1]

अर्थात् लोके अविच्छिन्नप्रवाहस्य रत्यादेः यानि कारणानि ललनादिरूपाणि, यानि च कार्याणि रत्यादि कायिक–वाचिक–मानसिकभेदेन नानाविधानि कटाक्षकाकूक्ति-रोमाञ्चादीनि यानि च सहकारीणि सहायकानि लज्जाप्रभृतीनि तानि च पूर्वोक्तानि

---

1. काव्य– 4.43

कारणादीनि यदि नाट्यकाव्ययोर्वर्ण्यन्ते तानि क्रमेण विभावा अनुभावास्तथा व्यभिचारिभावाः कथ्यन्ते। तैश्च विभावाद्यैर्व्यञ्जनव्यापारेण प्रतिपादितः रत्यादि स्थायिभावो रस उच्यते। साहित्यशास्त्रे रसत्वस्य महत्त्वं वरीवर्ति। ध्वनिप्रवर्तक आनन्दवर्धनः रसस्य काव्येऽत्यधिकं महत्त्वं स्वीकरोति। यद्यपि तेन ध्वनेः वस्त्वलंकाररसरूपेण भेदत्रयं स्वीकृतं तथापि "काव्यस्यात्मा स एवार्थः" इत्यादि कारिकायां रसध्वनेः एव प्राधान्यं मुक्तकण्ठेन प्रतिपादितम्, अपिच भोजराजः सम्पूर्णवाङ्मयं स्वभावोक्तिवक्रोक्ति-रसोक्तिरूपेण विभज्य रसोक्तेः प्राधान्यं प्रादर्शि। साहित्यदर्पणकारेणापि- 'वाक्यं रसात्मकं काव्यम्', रुद्रटोऽपि 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति वाक्यानुसारेण रसस्यैव प्राधान्यं स्वीकरोति। अत एव रस एव काव्यस्य मूलभूतं जीवनतत्त्वमिति।

**विभावस्य लक्षणम्–** वासनारूपतया अतिसूक्ष्मरूपेणावस्थितान् रत्यादीन् स्थायीन् विभावयन्ति आस्वाद्ययोग्यतां नयन्तीति विभावाः। अर्थात् यदा मनुष्यः एकां नायिकां रमणीयपरिवेशे पश्यति तदा तस्य मनसि सुप्तावस्थायां स्थितः रतिभावः जाग्रतो भवति। एतदर्थं ललना, अनुकूलपरिवेशश्च कारणौ भवतः। एतादृशानि कारणानि एव विभावा इत्युच्यन्ते। विभावः द्विविधो भवति। यथा–

1. **आलम्बनविभावः–** लोकव्यवहारे जनककारणम्। यथा - नायकादि।

2. **उद्दीपनविभावः** - लोकव्यवहारे पोषककारणम्। यथा - चन्द्रचकोर-भ्रमरगुञ्जनादयः। अनुभावस्य लक्षणम् - 'रत्यादीन् स्थायिनः अनुभावयन्ति अनुभवविषयीकुर्वन्ति इति अनुभावाः' इति। अर्थात् लोकव्यवहारे यानि कटाक्षचुम्बनादीनि भवन्ति कार्याणि तानि काव्येषु अनुभावा इति उच्यन्ते।

व्यभिचारिभावस्य लक्षणम्–

**ये तूपकर्तुमायान्ति स्वायिनं रसमुत्तमम्।**
**उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः।।**

अर्थात् लोकव्यवहारे रत्यादि स्थायिभावान् जाग्रतं कर्तुं यानि सहकारिकारणानि भवन्ति तानि काव्येषु व्यभिचारिण इत्युच्यन्ते। एतेषां संख्या त्रयस्त्रिंशत्। उक्तं हि–

**निर्वेग्लानिशंकाख्यास्तथाऽसूयामदश्रमाः।**
**आलस्यञ्चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः।।**

**व्रीडा चपलता हर्ष आवेगो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च।।**

**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।।**

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥[1]

अग्निपुराणानुसारं प्रत्येकेषां व्यभिचारिभावानां लक्षणं निम्नोक्तप्रकारेण समुपस्थाप्यते—

वैराग्यादेर्मनः खेदो निर्वेद इति कथ्यते।
मनः पीडादिजन्मा हि सादो ग्लानि शरीरगा॥

शङ्कानिष्टागनोत्प्रेक्षा स्यादसूया च मत्सरः।
मदिराद्युपयोगोत्त्थं मनः समोहनं मदः॥

क्रियातिशयजन्मान्तः शरीरोत्त्थक्लमः श्रमः।
शृङ्गारादिक्रियाद्वेषश्चित्तस्यालस्यमुच्यते॥

दैन्यं सत्त्वादपभ्रंशश्चिन्ताथपरिभावनम्।
इति कर्तव्यतोपायदर्शनं मोह उच्यते॥

स्मृतिः स्यादनुभूतस्य वस्तुनः प्रतिबिम्बनम्।
मतिरर्थपरिच्छेदस्तत्त्वज्ञानोपनायितः॥

ब्रीडानुरागानुभवः सङ्कोचः कोऽपि चेतसः।
भवेच्चपलताऽस्थैर्यं हर्षश्चित्तप्रसन्नता॥

आवेगश्च प्रतिकाराशया वैधुर्यमात्मनः।
कर्तव्ये प्रतिभाभ्रंशो जडतेत्यभिधीयते॥

इष्टाप्राप्तिरपचितिः सम्पदाऽभ्युदयो धृतिः।
गर्वः परेष्ववज्ञानमात्मन्युत्कर्षभावना॥

भवेद्विषदो दैवादेर्विधातोऽभिष्टवस्तुनः।
औत्सुक्यमीप्सितप्राप्तेर्वाञ्छया तरला स्थितिः॥

चित्तेन्द्रियाणां स्तैमित्यमिन्यपस्मारोऽचला स्थितिः।
अङ्गव्याध्यादिभिस्त्रासो वीप्सा चित्तचमत्कृतिः॥

कोधस्याप्रशमोऽमर्षः प्रबोधश्चेतनोदयः।
अवहित्था भवेद् गुप्तिरिङ्गिताकारगोचरा॥

रोषतो गुरुवाग्दण्डं पारुष्यं विदुरुग्रताम्।
अहो वितर्कः स्याद् व्याधिर्मनो वपुरवग्रहः॥

---

1. काव्य 4.31–34

**अनिबद्धप्रलापादिरुन्मादो मदनादिभिः।**
**तत्त्वज्ञानाविना चेतः कषायः परमः शमः।।**

**स्थायिभावाः यथा–**

**अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।**
**आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सङ्गतः।।**

अर्थात् अनुकूल-प्रतिकूलभावाः यं तिरोधातुं (विलोपं कर्तुं) असमर्थाः भवन्ति, सः रसानुभूतेः मूलरूपः स्थायिभावः इत्युच्यते, स्थायिभावाः नवप्रकारकाः भवन्ति। यथोच्यते-

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च।।**

अत्र मनोऽनुकूलपदार्थेषु मनसः तत्परता रतिः, वचनानां विकारेण चेतसः विकासः हासः, इष्टपदार्थस्य विनाशात् चेतसः विह्वलता शोकः, शत्र्वादिप्रतिकूल-विषयेषु प्रतिकारेच्छा क्रोधः, कार्यारम्भे अत्यन्तस्थिरावेशः उत्साहः, रौद्रशक्त्या उत्पन्नो चेतसः विह्वलताभावः भयः, दोषानुदर्शनात् विषयं प्रति घृणाभावः जुगुप्सा, लोकसीमातिक्रमितानेकपदार्थेषु चित्तस्य विस्तारः विस्मयः, निस्पृहावस्थायाम् आत्मदर्शनेन यः विश्रामः तेनोत्पन्नं सुखं शम इत्युच्यते। एतदेव कारिकायां विश्वानाथः प्रतिपादयति। यथा–

**रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम्।**
**वागादिवैकृतैश्चेतो विकासो हास ईष्यते।।**

**इष्टनासादिभिश्चेतो वैक्लव्यं शोकशब्दभाक्।**
**प्रतिकूलेषु तैक्ष्णस्यावबोधः क्रोधः ईष्यते।।**

**कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।**
**रौद्रशक्त्या तु जनितं चित्तवैक्लव्यजं भयम्।।**

**दोषेक्षणादिभिर्गहा जुगुप्सा विस्मयोद्भवा।**
**विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु।।**

**विस्फोटचेतसो यस्तु स विस्मय उदाहृतः।**
**शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम्।।**

**रसभेदाः** - रसस्य भेदगणनावसरे विद्वांसैः स्वस्वमतान्युपस्थापितानि। नाट्य-शास्त्रेऽस्य नवभेदाः स्वीकृताः। यथा–

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**विभत्साद्भूतशान्ताश्च नाट्ये नवरसाः स्मृताः।।**

मम्मटाचार्योऽपि 'अष्टौ नाट्ये रसाः स्मृताः' इत्युद्घोषयन् 'शान्तोऽपि नवमो रसः' इति उपसमहार्षुः। पण्डितराजजगन्नाथस्तु अस्मिन् प्रसङ्गे गम्भीरचिन्तनं कृत्वा स्वमतमुपस्थापितवान्। यथा–

**शान्तस्य शमसाध्यत्वान्नहे च तदसम्भवात्।**
**अष्टावेव रसाः काव्ये न शान्तस्तत्र युज्यते।।**

परन्तु अन्ये विद्वांसः एतन्न स्वीकुर्वन्ति। तेषां मतानुसारम्–

**आष्टावेव रसाः काव्येष्विति केचिदचूचुदन्।**
**तदचारुः यतः कञ्चिन्न रसं स्वदते नरः।। इति।।**

एवं प्रकारेण काव्येषु नाटकेषु वा नवरसाः भवन्ति इति निश्चीयते। भोजराजमतानुसारं वत्सलोऽपि एकः रसः सुधीभिः स्वीक्रियते। यथोच्यते–

**शृङ्गारवीरकरुणाद्भुतरौद्रहास्यविभत्सवत्सभयानकशान्तनाम्नः।**
**आम्नाशिषुर्दशरसान् सुधीयो वयं तु शृङ्गारमेव रसनाद्ररसमानानाम्।।**

# उपनिषत्कालिकशिक्षायां चरित्रनिर्माणस्योद्देश्यम्

**-जीवनकुमारः**

शोधच्छात्रः, रा.सं.सं., श्री रणवीरपरिसरः

कोट-भलवालः, जम्मूः

उपनिषत्सु "सा विद्या या विमुक्तये" इति मुख्यरूपेण चर्चितं वर्त्तते। उपनिषत्सु एष डिण्डिमघोषोऽपि श्रूयते - "ऋते ज्ञानान्न मुक्तिः" अर्थात् ज्ञानं विना मुक्तिः न सम्भवति। शिक्षायाः तात्पर्यं केवलं ज्ञानार्जनमस्ति इति कथनं समीचीनं न प्रतिभाति यतोहि केवलं पुस्तकीयं ज्ञानं शिक्षायाः तात्पर्यं भवितुं नार्हति। एतत् कथ्यते यद् विभिन्नशास्त्राणां ज्ञाने सत्यपि यदि मानवस्य अन्तर्दृष्टेः विकासो न जातः तर्हि तस्य शिक्षायाः समुपलब्धिर्नास्ति। सः अज्ञः अशिक्षितः एव भण्यते। क्रियावान् पुरुष एव वस्तुतः शिक्षितोऽस्ति। उक्तञ्च-

**"शास्त्राण्यधीत्यापि भवन्ति मूर्खाः।**
**यस्तु क्रियावान् पुरुषः स विद्वान्॥"**

उपनिषत्सु शिक्षाया उद्देश्यं ज्ञानार्जनं दृश्यते। सामान्यरूपेण लोके 'शिक्षा' इति कथनेन सदैव ज्ञानार्जनं गृह्यते। उपनिषत्काले महर्षीणां मते ज्ञानार्जनम् एव शिक्षा आसीत्। यथा विशेषस्य ज्ञानवृद्धिः स्यात् तच्च ज्ञानं भौतिकं आध्यात्मिकं वा आसीत्। अतः पुराकाले विद्वांसः शिक्षोद्देश्यं ज्ञानार्जनमेवेत्यङ्गीकृतवन्तः। ज्ञानप्राप्तिप्रसङ्गे उपनिषत्सु महर्षिभिः स्वशिष्यान् उद्दिश्य कथितं निम्नवचनं शिक्षायाः महत्त्वं प्रतिपादयति "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्"[1] उपनिषत्सु स्वाध्यायः परमं तपः कथितमस्ति "स्वाध्यायः परमं तपः"[2]। वेदानां दैनन्दिनाध्ययनेन जातायाः अभिनवज्ञानोपलब्धेः समाजे वितरणार्थं प्रवचनस्य विधानम् आसीत्[3]।

वैदिकमन्त्राणाम् उच्चारणेन ऋषयः गहनं ज्ञानं समासादिवन्तः। ते महर्षयः अनुभूतं तज्ज्ञानं स्वशिष्यमाध्यमेन जगति प्रसारितवन्तः। उपनिषत्सु पित्रोर्गुरोश्च ईश्वरतुल्यत्वं मन्यते।

---

1. तैतिरीयोप. - 1.11.2
2. तैतिरीयोप.
3. तदेव.

**मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव।।**[1]

उपनिषत्सु परा विद्या- सूक्ष्मं ज्ञानम् अपि अभिधीयते। अस्मिन् ज्ञाने आन्तरिकी शान्तिः परब्रह्मलयः आत्मिकज्ञानप्राप्तेः नियमाः साधनपक्षः इत्यादयो विषया आगच्छन्ति। एतदतिरिक्तं स्वरूपानुसन्धानमपि पराविद्याया अङ्गम् अस्ति। पराविद्याया ज्ञानमेव उपनिषत्सु 'विद्या' इति नाम्ना उच्यते। उपनिषद्-शिक्षायाः ज्ञानस्य दृष्टिकोणम् अतिविस्तृतमासीत्। एतदेव कारणम् आसीत् यत् महर्षयोऽपि ज्ञानार्जनाय आचार्यमुपगच्छन्ति स्म।

औपनिषदाचारसंहितानुसारं वास्तविकरुपेण ज्ञानपिपासुः एव ज्ञानस्य अधिकारी आसीत्, यः विनीतः ज्ञानप्राप्त्यर्थं समित्पाणिः भूत्वा गुरोः समीपं गच्छति स्म।[2] सर्वाणि परवर्त्तिदर्शनशास्त्राणि उपनिषत्सु वर्णितेन ज्ञानपुञ्जेन आलोकितानि सन्ति। नासीत् तत्कालीना शिक्षा दिग्विहीना। शिष्याय समावर्तनकाले प्रदत्ताः गुरोरुपदेशाः आजीवनं ज्ञानयज्ञसम्पादनार्थं प्रेरका आसन्। ज्ञानस्य उपक्रमः तावत् पर्यन्तं प्रचलति यावत्पर्यन्तं परमात्मनः साक्षात्कारः न भवति। उपनिषत्सु वर्णितं ज्ञानार्जनात्मकं शिक्षोद्देश्यम् अन्यत्र कुत्रचिदपि न दृश्यते। बृहदारण्यकोपनिषदि एकस्मिन् सन्दर्भे सन्यासग्रहीतुकामः याज्ञवल्क्यः स्वकीयभार्ययोः कात्यायनीमैत्रेय्योः निजां सम्पत्तिं वितरितुं वाञ्छति। कात्यायनी स्वकीयं भागं गृहीत्वा सन्तुष्टा अभवत्। परञ्च मैत्रेयी महर्षियावल्क्यम् कथितवती- "येनाहं नामृता स्यां किमहं तेन कुर्याम्"। अर्थात् मया किं कर्त्तव्यम् येनाहं अमृता भवामि। महर्षियाज्ञवल्क्यः तां प्रत्युवाच- "अमृतपदस्य ज्ञानेन तथा भवितुमर्हति"। इति। ज्ञानस्य प्राप्तिसाधनं निर्दिश्य याज्ञवलक्यः 'उपदिशति'[3]-

> **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो। मैत्रेयात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानमेवेदं सर्वं विदितम्।।"**

भूतिमिच्छता जीवात्मना आत्मतत्त्वस्यैवैकस्य प्राप्तये श्रवणं, मननं, निदिध्यासनं च विधातव्यम्। यतो हि ज्ञाते आत्मतत्त्वे सर्वं ज्ञातं भवति। मननेन ध्यानेन च साधकः शनैः शनैः सर्वम् अधिगच्छति। इत्थं यदा मानवः वैयक्तिकीं भावनां विधाय विश्वचैतन्येन सह एकात्मताम् अनुभवति। तदा तस्य दृष्टिः समष्टिस्वरूपा भवति। तदा स पंचत्तत्त्वानां साक्षात्कारं करोति- "यत् पिण्डे तद् ब्रह्माण्डे"[4]। यद्

---

1. तै.उ. 1.1
2. मुण्डकोप. पृ. 160 (2 प्रश्न. उप. 1/1)
3. बृ.उप. 4.4.5
4. चित्शक्तिविलास स्व.मु.

वस्तु अस्मिन् देहे वर्त्तते तदेव वस्तु अस्मिन् ब्रह्माण्डे अपि विद्यते। अस्य शरीरस्य निर्माणं पञ्चतत्त्वानां-पृथिवी-जल-तेजो-वायु-आकाशानां सम्मिश्रणेन भवति तथैव अस्य ब्रह्माण्डस्य निर्माणमपि पञ्चतत्त्वानां सम्मिश्रणेन अभवत्। आत्मसाक्षात्कारादनन्तरमेव वास्तविज्ञकज्ञानस्य प्राप्तिर्भवति। अस्मिन् प्रसङ्गे मुण्डकोपनिषदि उक्तं वर्त्तते[1]–

**"भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।"**

अस्य मन्त्रस्यायमर्थः- कार्यकारणस्वरूपस्य तस्य परात्परस्य पुरुषोत्तमस्य ज्ञानेन अस्य जीवस्य हृदयग्रन्थिः छिन्ना भवति। जीवः हृदयग्रन्थिवशात् एव पिण्डमेव निजात्मानं मन्यते। हृदयग्रन्थिभेदात् पिण्डे कर्माणि लयं यान्ति। अयं जीवः निर्मुक्तः परमानन्दस्वरूपो भवति। इत्थं पूर्वोक्तविवेचनादेतदायाति यत् औपनिषत्कशिक्षायाः प्रमुखमुद्देश्यं ज्ञानार्जनमासीत्। ज्ञानार्जनम् इत्युक्ते सत्यस्योपलब्धिः अभूत्।

तत्र लब्धस्य ज्ञानस्य जीवने आचरणे च प्रयोगः शिक्षायाः उद्देश्यम अभूत्। अयं च विषयः उपनिषदि आगतेभ्यः प्रसङ्गेभ्यः स्पष्टं प्रतिभाति। तथा हि सनत्कुमारस्य सविधेः नारदः गत्वा ज्ञानं उपदेष्टुं प्रार्थितवान्। सनत्कुमारः नारदं पृच्छति के के विषयाः त्वया इतः पूर्वं अधीताः? इति। नारदः सर्वान वेदान् व्याकरणशास्त्रं रसायनशास्त्रं ललितकलादिविषयान् जानन् अपि आत्मतत्त्वज्ञानरहितम् आत्मानम् कथयति। तदेव ज्ञानं दातुं सः सनतकुमारं प्रार्थयति च। एतादृशः एव सम्वादः यमनाचिकेतसोः मध्ये कठोपनिषदि अपि दृश्यते। मुण्डकोपनिषदि वर्णितं यत् भरद्वाजसुकेशादयः ऋषय आत्मज्ञानं लब्धुं ब्रह्मज्ञं पिप्पलादं प्रति अगच्छन्। तस्मादात्मज्ञानं च अलभ्यत एभिः। उपर्युक्तप्रसङ्गैः स्पष्टं प्रतिभाति यत् उपनिषत्काले सर्वापेक्षया उत्कृष्टं शिक्षोद्देश्यम् आत्मज्ञानस्य लाभ एव आसीत्। तेन आत्मज्ञानेन मनुष्यः सर्वथा भयरहितः आनन्दयुक्तश्च भवति स्म। अर्थात् ज्ञानलाभादनन्तरं शोकस्य भयस्य मोहस्य वा नासीदवसरः। वस्तुतः आत्मज्ञानमेव सत्यं आनन्दस्वरूपं च वर्तते। अद्यत्वे तु शिक्षायाः उद्देश्यमेव सर्वथा मानवजीवनेन असम्बद्धं अयुक्तं च वर्तते। अतः आधुनिककालेऽपि शान्तिलाभाय सुखोपलब्धये च उपनिषद् कालीनशिक्षायाः उद्देश्यस्य महत्त्वं वर्त्तते एव।

1. मुण्डकोपनिषद्

# वैदिकशिक्षायां गुरु-शिष्यसम्बधः

**-ऋषि कुमारः**

साहित्यशोधच्छात्रः,

श्री रणवीर परिसर, जम्मू।

**आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः।**
**जीमूता आसन्त्सत्वानस्तैरिदं स्वरामृतम्।।[1]**

भारतीयप्राचीनशिक्षायाम् आध्यात्मविद्या तथा ईश्वरप्राप्तिः मुख्यलक्ष्यमासीत्। शिक्षायाः उद्देश्यं आत्मबोधः मोक्षप्राप्तिः आसीत्। वैदिकयुगे भारतीयशिक्षायाः अभिप्रायः प्रकाशस्त्रोतः तथा जीवनस्य विभन्नकार्येषु मार्गालोकः आसीत्। प्राचीनकाले धर्मार्थकाममोक्षाणां प्राप्तिः आश्रमाणां पालनेन भवति स्मः। ततः एव भाविसमाजस्य सुनिर्माणं भवति स्म।

वयं प्राचीनशास्त्रानामनुशीलनेन ज्ञातुं शक्नुमः यत् महिमामयसम्बन्धो विद्यते आचार्यान्तेवास्योर्मध्ये। त्यागतपस्यामयजीवनेन उभयोर्मध्ये अन्तः क्रियया समाजमग्रे गच्छति। तस्मिन् काले आचार्यस्य महत्वपूर्ण स्थानमासीत्। संस्कृतवाङ्मये उद्धृतं वर्तते-

**अथाधिविद्यम्- आचार्यः पूर्वरूपमन्तेवास्युत्तररूपम्**
**विद्यासन्धिः प्रवचनं सन्धानमित्यधिविद्यम्।।[2]**

अत्र शिक्षायाः सम्पूर्णतायाः विषये अथवा विद्याप्राप्तिविषये घटक-चतुष्टयस्यावश्यकता भवति। आचार्यः, अन्तेवासी, विद्या, प्रवचनम्। महाभाष्ये विषद्वर्णनं वर्तते-

**चतुर्भिर्प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन**
**स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति।।[3]**

---

1. अथर्ववेदः- 11.14
2. तैत्तरियोपनिषद् शिक्षावल्ली 1.11
3. महाभाष्य अ. 1.1.1 आ.1

आगमकाले शिष्यः गुरोः समक्षे उपविष्य सावधानतया विद्यादिसदुपदेशं गृह्णाति। स्वाध्यायकाले पठनपाठनसमये यत्किमपि ज्ञानमर्जितं तस्य विषये पूर्वापरं विचार्य उत्तमरीत्या हृदये दृढं कृत्वा स्थापयति। प्रवचनकाले हृदयस्थितप्रचारप्रसार-परिचर्चादि करोति। व्यवहारकाले तस्य गुरुमुखप्रकटहृदयसञ्चित-ज्ञानस्य व्यवहारे उपयोगसंप्रयोगादि आचरणे तस्य परिपालनम् अर्थात् श्रवणमनननिदिध्यासनसाक्षात्कारः इति।

**सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः।**
**लालनाश्रयणो दोषास्ताडनाश्रयिणो गुणाः॥[1]**

आचार्यः स्वशिष्यान् प्रेम्णा विद्यां सुशिक्षां च प्रयच्छति तत्र समये-समये विद्वेषरहितं ताडनादि कुर्यात्। यतोहि विद्यार्थिनां स्नेहादिलालनमधिकं न श्रेयस्करं नोचेत् लालनेन तेषां भाविजीवनमधोगतिं यास्यति। परन्तु ताडनादिद्वारा अङ्भङ्गं न स्यात्।

**आचार्यविषये निरुक्तकारमाह–**

**आचार्य कस्मात्? आचारं ग्राह्यति,**
**आचिनोति अर्थात् आचिनोति बुद्धिमिति वा॥[2]**

अर्थात् यः सदाचारयुक्तः धार्मिकः, नैतिकः, तपस्वी च स्वन्तेवासिनं सदाचारपथं प्रेषयति सः आचार्यः। सः तस्यान्तेवायोगक्षेमं वहति। आचार्यः एव समुपयुक्तशब्दानां नानापदार्थानाम् ज्ञानं शिष्यं बोधयति। शब्दज्ञानेनैव विविध विद्याज्ञानविज्ञानकलाशिल्पादीनां ज्ञानं भवति। आचार्यः तेषां शब्दानां ज्ञाता बोधकश्च भवति। आचार्यैव शिष्यान्तर्निहितप्रसुप्तशक्तिं उद्भावयति। शारीरिकमानसिक-बौद्धिकशक्तीनां च विकासे आचार्यः सदा कृतसङ्कल्पो भवति। मुण्डकोपनिषदि आचार्यविषये उक्तम् –

**तद् विज्ञानार्थं स गुरुमेवाभिगच्छेत्**
**समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥[3]**

अर्थात् ब्रह्मतत्त्वज्ञानार्थं अन्तेवासी समित्पाणिः आचार्याणां समिपे गच्छेत् सः आचार्यः श्रोत्रियो ब्रह्मनिष्ठश्च भवेत्। पाणिनीयसूत्रे अपि–

श्रोत्रियश्चछन्दोधीते॥[4] मनुना अपि उद्घोषितम्–

---

1. महाभाष्य अ. 8. पा.1 सू.8. आ.1
2. निरुक्त
3. मुण्डकोपनिषद् 1.2.12
4. अष्टाध्यायी 5.2.84

**उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।**
**संकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।।**[1]

आचार्याणां कृते शास्त्रे आदेशोऽपि वर्तते–

**"यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि।।[2]"**

अत्र गुरुः शिष्यमुपदिशति- हे शिष्य! अनिन्दनीयकार्याणि अर्थात् यानि धर्मसंयुतकर्माणि सन्ति तानि एव त्वया सेवितव्यानि न अन्यानि। वैदिककालीन-ऋषयः प्रकटयन्ति, यत् तस्मिन् काले गुरुः सर्वदा शिष्याणां गुणसंवर्धनाय यतते।

अन्तेवासिशिष्यस्य लक्षणानि सन्ति- ब्रह्मचारी, श्रद्धावान्, शुचिः, अप्रमत्तः, प्रशान्तचितः सद्गुणासम्पन्नश्च। कठोपनिषदि अस्मिन् विषये उक्तमस्ति-

**नाविरतो दुश्चारितान्नाशान्तो नासमाहितः।**
**नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्।।**[3]

आचार्यः योग्यशिष्यायैव विद्यादानं करोति। येन समुचितव्यवस्थितसमाजस्य निर्माणं स्यात्।

**ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ**
**यथाकामं प्रश्नान् पृच्छथ।।**[4]

एवं प्रकारेण प्राचीनवैदिकशिक्षाकाले आचार्यान्तेवासिनां सन्दर्भे उत्कृष्ट-स्वरूपस्य वर्णनं प्राप्यते, येन तमोपयजीवनेन विद्याद्वारा ऐहिकामुष्मिकफलप्राप्तिः भवेत्। यस्याः शिक्षापद्धत्याः मानवस्य व्यक्तित्वं विकाससम्पन्नम् आसीतिति तस्यैव वर्णनं वेदोपनिषच्छिक्षाशास्त्रादिषु वर्णनं वर्तते।

---

1. मनुस्मृतिः
2. तैत्तरियोपनिषद् शिक्षावल्ली 1.11
3. कठोपनिषद् 2.24
4. प्रश्नोपनिषद्

# वैदिकशिक्षा कविशिक्षा शिक्षाशास्त्रञ्च

-राहुल लोधा
शोधच्छात्रः, साहित्यविभागः,
श्रीरणवीरपरिसरः, जम्मूः

**वैदिकशिक्षा–**

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[1]

**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः।**
**ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु।।**

इति वेदस्य षडङ्गेषु शिक्षापि परिगणितास्ति। अत्र शिक्षा न केवलं परिगणिता अपितु घ्राणत्वेनारोपिता। मनुष्यवपुषि घ्राणस्य यत्कार्यं भवति तदेव शिक्षाया अस्ति वेदपुरुषाय। उक्तेषु प्रतिपादितेषु वेदस्य षडङ्गेषु शिक्षा अन्यतमा। अक्षराणां स्थानप्रयत्नोच्चारणानि शिक्षायाः प्रतिपाद्यो विषयः। शिक्षा इति पदस्य अभ्यसनमित्यर्थः। शिक्ष्यन्ते=वेद्यन्ते उपदिश्यन्ते स्वरवर्णादयो यत्रासौ शिक्षा"[2] इति सायणाचार्यः निब्रूते।

यया विद्यया वेदमन्त्राणां शुद्धोच्चारणं सरलत्वेन सहजत्वेन वा भूयते सा शिक्षेति कथ्यते। स्वरवर्णादीनामुच्चारणनियमबोधयित्री विद्या शिक्षेत्यभिधीयते। वेदेषु सर्वत्र स्वरप्राधान्यं भवति, स्वरभेदेनार्थभेदसम्भवात् इदं स्वरज्ञानं शिक्षाधीनं भवति। अत एव शिक्षाशास्त्रस्य वेदाङ्गता सुतरामुपपद्यते, यत अशुद्धोच्चारणेन महाननर्थो भवति। यथोक्तं पाणिनीयशिक्षायाम्।

**मन्त्रो हीनः स्वरतो वर्णतो वा,**
**मिथ्या प्रयुक्तो न तमर्थमाह।**

---

1. पाणिनीयशिक्षाः
2. सायणभाष्यः

**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वतोपराधात्।।**[1]

बहुश्रुतास्ति आख्यायिकेयं यत् विश्वरुपनामके त्वष्टुः पुत्रे इन्द्रेणाहते सति रुष्टस्त्वष्टा इन्द्रस्य हन्तारं पुत्रमुत्पादयिषुः अभिचारिकं यागं कृतवान्। तत्र इन्द्रशत्रुर्वर्धस्व इति मन्त्र उहितः तत्र तत्पुरुषप्रयुक्तान्तोदात्तत्वे कर्त्तव्ये बहुब्रीहिः प्रयुक्त आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानाद् इन्द्रेण सोऽपि हतः। अतः मन्त्रेषु स्वरदोषो वर्णदोषो वा कथमपि न भवेदिति उपस्थापयन् महर्षिः पाणिनिः आह, मन्त्र इति। स्वरतः स्वरेण, वर्णतो वर्णेन अक्षरेण वा हीनः, रहितः मन्त्रः मिथ्याप्रयुक्तः सन् तमभीप्सितमर्थं न आह। स मन्त्रो वाग्वज्रं भूत्वा यजमानं हिनस्ति घातयति। अनिष्टावापितं करोतीति। यथा स्वरस्य अपराधाद् 'इन्द्रशत्रुः' इन्द्रशत्रुशब्दो यजमानं हिनस्ति हिंसितवानित्यर्थः। ननु स्वरादीनां सम्यगुच्चारणाभावे ऋत्विजां दोष इति ऋत्विगादिकृतहोमाद्यजमाने धर्मोत्पत्तिरिव तत्कृतापशब्दप्रयोगाद् यजमाने प्रत्यवायोत्पत्तिरिति स्वीकारात्। शिक्षा नाम यया मन्त्राणां पदवर्णमात्रास्वरादिज्ञानं वर्णोच्चारणविधिपरिज्ञानपूर्वकस्थानादिपरिचयश्च भवति। तदाहुः ऋग्वेदभाष्यभूमिकायां सायणाचार्याः, **"शिक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं साम सन्तान इत्युक्तः शिक्षाध्यायः"**[2] इति॥ वर्णोऽकारादिः। स च अङ्गभूतशिक्षाग्रन्थे स्पष्टमुदीरितः **"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते च अपि स्वयं प्रोक्ताः स्वयम्भुवेत्यादिना। स्वरा उदात्तादयः, तेऽपि तत्रोक्ताः उदात्तश्चाऽनु-दात्तश्च स्वरितश्च स्वरास्त्रयः"** इति। मात्राः ह्रस्वादयः, ता अपि तत्रोक्ताः **"ह्रस्वो दीर्घः प्लुत"** इति। कालतो नियमा अचीति। बलं स्थानप्रयत्नौ, तत्राऽष्टौ स्थानानि वर्णानामित्यादीनां स्थानमुक्तम्। अचोऽस्पृष्टा यणस्त्वीषदित्यादिना प्रयत्ना उक्ताः। सामशब्देन साम्यमुक्तम्, अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुण-युक्तत्वेनोच्चारणं साम्यम्। **"गीती शीघ्री शिरःकम्पीत्यादिनोपांशुदृष्टं त्वरित-मित्यादिना दोषा उक्ताः"**। **"माधुर्यमक्षरव्यक्तिरित्यादिना"** गुणा उक्ताः। सन्निकर्षः संहिता, वायवायाहीत्यत्रावादेशः, इन्द्राग्नी आगतमित्यत्र प्रकृतिभावः, एतच्चव्याकरणेऽभिहितत्वात् शिक्षायामुपेक्षितम्। शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्रोदाहृतः **"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तः"** इत्यादिना इति।

वेदाऽभ्यासोपकारितया वेदाङ्गत्वं शिक्षादीनामुपपद्यते। तत्र **"शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्"** - इत्याद्युक्तदिशा शिक्षायाः घ्राणत्वप्रतिपादने-नाऽतीवावश्यकत्वमङ्गीकृतम् यद्यपि शरीरस्थोच्चस्थानगतं मुखस्थानीयं व्याकरणं तथापि नासिकया मुखोपरि स्थित्या तत्स्थानाऽपन्ना शिक्षैव सर्वोपरिवरीवर्ति,

---

1. पाणिनीयशिक्षा
2. ऋग्वेदभाष्यभूमिका

पदसाधुत्वमात्रविधायकं व्याकरणम् उच्चारणादिविधिहीनं सत् नासिकाविरहितं मुखमिव न शोभते इति शिक्षायाः वेदनासिकात्वसामञ्जस्येन सयुक्तिकं सम्पद्यते।

**कविशिक्षा–**

कवये शिक्षा कविशिक्षा इति व्युत्पत्तिः। संस्कृतसाहित्यशास्त्रजगति नैका अलङ्कारग्रन्थाः समुपलभ्यन्ते। सर्वेषु अलङ्कारग्रन्थेषु विविधै आचार्यैः विविधविध-कवीभ्य उपयुक्ताः शिक्षाः प्रतिपादिताः। वस्तुतः सर्वेषु लक्षणग्रन्थेषु कविशिक्षाया एव निरुपणं कृतमालङ्कारिकैः। किन्तु कुत्रापि केनापि कविशिक्षायाः स्पष्टोल्लेखः न कृतः। काव्यप्रकाशध्वन्यालोकादिषु ग्रन्थेषु काव्यलक्षणाणि, काव्यगुणाः, काव्यदोषाः, रीतयश्चादयः प्रतिपादताः। इमानि सर्वाणि तत्वानि कवये एव प्रतिपादितानि न तु काव्याय। काव्यन्तु मूर्तः पदार्थोऽस्ति तदन्यस्य काव्यस्य सृजनशक्तिः नाधत्ते। काव्यं तु कवेः कर्म अत एतत् सर्वं कवये शिक्षयितुमेव अथवा कविशिक्षारुपमेव। मम्मटेन काव्यलक्षणं प्रतिपादितम्–

**तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।**[1]

इत्यत्र मम्मटेन काव्यस्य स्वरुपं निरुपितम्। परोक्षदृष्ट्या अत्र आचार्येण मम्मटेन कवीभ्यः शिक्षा प्रदीयते यत् काव्यं कीदृशं भवेदिति। काव्ये शब्दार्थाः दोषरहिताः, गुणयुक्ताः, क्वचिदलङ्कारयुक्ताः क्वचिच्चालङ्काररहिताः स्यु इत्यादयः नियमाः काव्यसर्जनाय प्रतिपादिताः।

इतः परं कविराजविश्वनाथेन प्रतिपादितं काव्यस्वरुपम्–

**वाक्यं रसात्मकं काव्यम्।**[2]

आचार्यविश्वनाथेन रसयुक्तं वाक्यं काव्यं स्वीकृतम्। वस्तुतः वाक्यानि विभिन्नानि भवन्ति। आचार्यैः लक्षणमपि कृतं– **"योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः"**[3] इति। किन्तु विश्वनाथमते योग्यता–आकाङ्क्षा–आसत्तियुक्तः रसरहितः पदोच्चयो वाक्यं काव्यत्वं नाङ्गीकरोति, अपितु रसयुक्तः पदोच्चय एव काव्यत्वमादधतीति। एवम्प्रकारेण वक्रोक्तिव्यक्तिविवेकध्वन्यालोकादिष्वपि प्राप्यते।

**शिक्षाशास्त्रम्–**

इदमुपर्युक्ताभ्यामुभाभ्यां भिन्नं शास्त्रमस्ति। शिक्षा पदं भ्वादिगणीया शिक्षँ विद्योपादाने धातुना निष्पद्यते। शिक्षाशास्त्रं वस्तुतः शिक्षणशास्त्रमस्ति। शिक्षणकार्यस्य

---

1. काव्यप्रकाशः
2. साहित्यदर्पणम्
3. साहित्यदर्पणम्

प्रक्रियायाः विधिवत् अध्ययनं शिक्षाशास्त्रमस्ति। अस्मिन् शास्त्रे अध्ययनस्य शैलीनां नीतीनां वा अध्ययनं क्रियते। शिक्षको यदा अध्यापनं कारयति तदा तस्य प्रयासो भवति यदधिगमकर्तारमधिकाधिकमधिगमो भवेत्।

शिक्षा एका सजीवा गतिशीला च प्रक्रियास्ति। अत्र अध्यापकछात्रयोर्मध्ये अन्तःक्रिया भवति, सम्पूर्णा चान्तःक्रिया किमपि लक्ष्यं प्रति उन्मुखा भवति। अस्मात् कारणादेव आङ्ग्लभाषायां शिक्षा एजुकेशन इति नाम्ना विख्यातास्ति। एजु अर्थात् अन्तःप्रक्रिया केशन अर्थात् विस्तारः। शिक्षक-शिक्षार्थिनः शिक्षाशास्त्रमाध्यमेन परस्परं व्यक्तित्वेन लाभान्विताः प्रभाविताश्च भवन्ति। प्रत्येकम् अध्यापकस्य हार्दिकी इच्छा भवति यत् तस्य शिक्षणं प्रभावोत्पादकं भवेत्। शिक्षणे प्रभावोत्पादनाय शिक्षणस्य केचन सिद्धान्ताः सन्ति-

**1. क्रिया द्वारा शिक्षणस्य सिद्धान्तः**

बालकः स्वभावतः एव क्रियाशीलो भवति। निष्क्रियता तस्य प्रकृतेर्विपरीतमेव भवति आङ्गिकक्रियया स आनन्दमनुभवति। आत्मक्रियया बालकः शीघ्रं शिक्षते। अत अध्यापकस्य अध्यापनमेतादृशो भवेत् यत्र बालकस्य आत्मक्रियाया अवसरो भवेत्।

**2. जीवनसम्बद्धतायाः सिद्धान्तः**

आत्मजीवनसम्बन्धितवस्तुज्ञाने बालकस्य रुचिर्भवति। अतः पाठ्यवस्तुनि आत्मनः जीवनसम्बन्धितानि तथ्यानि सम्मिलितानि भवेयुः। अनेन पाठ्यक्रमः रुचिकरो भविष्यति।

**3. हेतु प्रयोजनस्य सिद्धान्तः**

पाठ्यवस्तुनि पाठस्य उद्देश्यं बालकाय सुस्पष्टो भवेत्। यावद्धेतु उद्देश्यं वा स्पष्टं न भविष्यति तावत् विषये रुचिः न भवितुमर्हति।

**4. चयनस्य सिद्धान्तः**

मनुष्यस्य जीवनं स्वल्पमस्ति ज्ञानविस्तारञ्चासीममस्ति। अतः पाठ्यसामग्र्यां जगति अपारज्ञानराश्या अत्यन्तोपयोगिनः वस्तुनः चयनं कर्त्तव्यम्।

**5. विभाजनस्य सिद्धान्तः**

सम्पूर्णपाठ्यवस्तुः बालकस्य सम्मुखं सहसा नैव प्रस्तूयते। सा उचितखण्डेषु, अन्वितीषु, इकाई इत्यादिषु विभक्ता। अन्वितयः सोपानवद्धवेयुः।

**6. पुनरावृत्तेः सिद्धान्तः**

आवृत्तिद्वारैव बालकः पाठ्यवस्तु ज्ञानराशिं वा स्थिररूपेण स्थापयितुं शक्नोति।

**शिक्षणसूत्राणि–**

1. ज्ञातादज्ञातं प्रति
2. सरलात् काठिन्यं प्रति
3. स्थूलाद् सूक्ष्मं प्रति
4. विशेषाद् सामान्यं प्रति
5. अनुभवाद् तर्कं प्रति
6. पूर्णादंशं प्रति
7. अनिश्चिताद् निश्चितं प्रति
8. विश्लेषणात् संश्लेषणं प्रति
9. तर्कपूर्णविधेः त्यागं मनोवैज्ञानिकविधेश्चानुसरणम्
10. इन्द्रियप्रशिक्षणेन शिक्षा
11. प्रकृते आधारः

**शिक्षणविधयः–**

येन विधिना शिक्षकः शिक्षार्थी ज्ञानं प्रददाति सः विधिः शिक्षणविधिः कथ्यते। शिक्षणविधि इति पदस्य प्रयोग अत्यन्तव्यापके स्तरे भवति। अत्र नैकाः प्रणाल्यः, योजनाः नैकाश्च शिक्षणप्रक्रियाः सम्मिलिताः भवन्ति। शिक्षणस्य विविधविधयः निम्नाः सन्ति–

1. निगमनात्मकमागमनात्मकम्
2. संश्लेषणात्मकं विश्लेषणात्मकञ्च
3. वस्तुविधिः
4. दृष्टान्तविधिः
5. कथनविधिर्व्याख्यानविधिश्च

कथनविधौ प्रायः पञ्चसोपानानां प्रयोगः क्रियते।

(क) प्रस्तावना

(ख) प्रस्तुतीकरणम्

(ग) तुलना अथवा सिद्धान्तस्थापना

(घ) आवृत्तिः

(ङ) प्रयोगः

6. प्रश्नोत्तरविधिः (सुकराती विधिः)

7. कृत्वा शिक्षणम् (करके सीखना, Learning by doing)

8. शोधविधिः

9. प्रायोजना विधिः (प्रोजेक्ट विधि)

10. डाल्टन-योजना

11. वर्धा योजना (बुनियादी तालीम)

# भावात्मक एकता के लिए शिक्षा

-प्रो. बच्चा भारती

आचार्य (शिक्षाशास्त्र विभाग)

के.सं.वि.वि, एकलव्य परिसर, अगरतला

मनुष्य एक भावना प्रधान प्राणी है जो उसे उच्च स्तरीय अध्यात्म साधना से प्राप्त है। भाव पक्ष को प्रबल पुरूषार्थ प्रदान करने वाले प्रत्येक स्थल पर तीन चरण हैं- भजन, मनन और चिन्तन। श्रवण, मनन और निदिध्यासन। उपासना, आराधना और साधना। ज्ञान, भक्ति और वैराग्य। इन तीनों को मिला देने से ही एक समग्र साधना प्रक्रिया का निर्माण होता है। अन्न, जल और वायु के तीनों अंग मिलकर ही पूर्ण आकार बनते हैं। इनमें से एक भी कम पड़ जाये तो जीवन यात्रा नहीं चल पायेगी। इसी प्रकार आत्मिक जीवन में भावात्मकता जागरित हो इसके लिए भजन, मनन और चिन्तन का उच्चस्तरीय होना आवश्यक है। अन्त:करण की स्वस्थता, प्रखरता, परिपुष्टता एवं प्रगति इन तीन आधारों पर ही निर्भर है। गायत्री महामंत्र जिसे बुद्धिमंत्र के नाम से भी जानते हैं के तीन चरणों में सूक्ष्म प्रेरणा का भाव (मनन, चिन्तन, निदिध्यासन) भरा है यथा -

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य**
**धीमहि धियो यो नः प्रचोदयात्।**

प्रारम्भिक ज्ञान प्रदान करने में ही हम विद्यार्थी के अन्तस में ऐसे लघु व स्पष्ट पदीय मंत्रों को स्मरण करायें, सरलतम ढ़ंग से अर्थ बोध करायें, अर्थ को गहराई से समझाकर अमल में लाएं।

बालक किसी मंत्र, श्लोक या कविता को तब तक हृदयंगम नहीं करेगा, जब तक कि वह उसके भाव को नहीं समझेगा। शिक्षक का कार्य केवल पढ़ाना ही नहीं बल्कि प्रदत्त ज्ञान का अभ्यास कराना भी है। ऐसी प्रक्रिया आरम्भ होने पर बालक की श्रद्धा भावना प्रस्फुटित होगी। जब भी श्रद्धा बढ़ेगी बालक सद्ज्ञान की प्राप्ति की ओर उन्मुख होगा। उसके अन्तस में सद्विचार उठेंगे। सुसंस्कारिता पल्लवित व पुष्पित होगी। अच्छे विचार (विद्या) नेक कर्म की ओर ही प्रेरित करते हैं। यदि हमारा विचार निम्न कोटि का है तो हमारी भावना भी निश्चित ही

निम्न होगी एवं उससे उत्प्रेरित कर्म भी निम्न ही होगा। वैदिक वांग्मय में बालकों के अन्दर उठने, बैठने, बोलने, भोजनादिक में भी मन्त्रों का प्रयोग भावना संवर्द्धन के लिए ही बताया गया है-

**'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोद्धत'।**

अर्थात् उठो, कायरता से दूर भगो, सम्पूर्ण विश्व के लिए अपने को बनाओ। 'वयं राष्ट्रे जागृयां पुरोहिताः'। हम पुरोहित लोग राष्ट्र के कल्याण की बात सोचें। श्रेष्ठता का वरण करें।

**सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।**
**तेजस्विनावधीतमस्तु मा विद्द्विषावहै।।**

आचार्य एवं शिष्य दोनों परस्पर एक दूसरे की रक्षा करें, साथ साथ प्रेम पूर्वक मिलजुल कर उपभोग करें, बलवान बनें, ब्रह्म वर्चस को धारण करें। किसी से ईर्ष्या न करें। आज शिक्षक-शिक्षार्थी अपने लिए पढ़-पढ़ा रहे हैं। एक दूसरे के प्रति भक्ति-भाव व अनुराग समाप्त होता जा रहा है। जिसके कारण हम ना तो वह शिक्षा प्रदान करा पा रहे हैं और ना ही वह ज्ञान बोध करा पा रहे हैं जिसे प्राप्त कर विद्यार्थी विद्या के अर्थ को समझ कर अपने अन्दर राष्ट्र के प्रति सद्भावना भर सकें। अतः कहा गया है कि -

**'क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेत्'**

हमारे अन्दर राष्ट्र के कल्याण की भावना हो, हमारे चिन्तन में, विचार में, उठने-बैठने में, मेल-जोल व वार्तालाप में राष्ट्र भक्ति का नव चिन्तन संचरित होना चाहिए। इसके लिए प्रतिपद आवश्यक है कि छात्रों में श्रद्धा का भाव कूट-कूट कर भरा जाय।

'भवानीशंकरौ वन्दे, श्रद्धा-विश्वास रूपिणौ।' श्रद्धा की भवानी ओर विश्वास का शंकर ही प्रस्तर खण्ड में विश्वास की भावना कर अलख जगाता है।

**'जाकी रही भावना जैसी, प्रभु मूरति देखी तिन तैसी।'**

परमात्मा भावना का भूखा होता है। भाव से हम एक लोटा जल, पुष्प, फल, धूप, दीप आदि जो भी समर्पित करते हैं, उसे प्रेम से प्राप्त कर प्रसन्न होता है। हमें भी अजस्त्र अनुदान मिलता है। यहां तक कि यदि कोई एक अगरबत्ती भी चित्र में बैठे (सूक्ष्मरूपेण) उस परम सत्ता को निवेदित करता है तो वह बहुत सारी उपलब्धियों की आकांक्षा रखता है।

